

श्रीपरमात्मने नमः ।

# सनातनजैनग्रंथमालायां

दशमांकः ।

आचार्यवर्य श्रीसमंतभद्रस्वामिविरचिता

७

# आप्तमीमांसा

स्याद्वादविद्यापतिश्रीविद्यानंदस्वामिविरचिता

८

# प्रमाणपरीक्षा च ।

न्यायशास्त्रिणा श्रीयुत-पंडितगजाधरलालजैनेन संपादिते ।

ते च

उस्मानाबादनिवासि-स्वर्गीयश्रेष्ठिवर्यगांधीकस्तूरचंद्रस्यात्मजबालचंद्रस्य स्मरणार्थं

काशीस्थ-भारतीयजैनसिद्धांतप्रकाशिनीसंस्थायाः व्यवस्थापकेन

श्रीपन्नालालजैनेन

काशीस्थ-कृष्णयंत्रालये चंद्रप्रभानाम्नि यंत्रालये च प्रकाशिते ।

श्रीवीरनिर्वाणसंवत्सरः २४४० ख्रिष्टाब्दः १९१४

प्रथमसंस्करणं ।

अस्यांकस्य मूल्यमेको रूप्यकः ।

# प्रस्तावना

## आप्तमीमांसा

प्रत्यपत्सत नाम वैफल्यं पुरा स्वपरहितापादनाकुंचितशेमुषीनामार्हतमतप्रवर्तकमानिनामार्हतानां पुरस्तात् सविनयमपि कृताभ्यर्थना: श्रीमताममलतत्त्वस्वरूपावबुभुत्सूनामवदाततया । परंतु नाद्यत्वे ते जैना: । प्रतियंति कतिपयास्तेष्वार्हततत्त्वप्रवर्तनफलं । समाविरभावि तैस्तत्स्वरूपप्रकाशनाय **सनातनजैन-ग्रंथमाला**भिधोऽनुपमप्रभाकर: । रसयंतु रसिका: तत्स्वरूपसुधां निर्व्यूहतया सांप्रतमिति समभ्यर्थना ।

समुपानीयते ग्रंथरत्नद्वयमिदमस्माभिरद्य श्रीमतां पुरस्तात् । आदिमं—**आप्तमीमांसा** वृत्यष्टशतीति विशदटीकाद्वितयविभूषिता । अपरं—अमलप्रमाणस्वरूपावबोधिका **प्रमाणपरीक्षा** । आदिमस्य प्रणेता किल ग्रंथरत्नस्य समजनि श्रीमत्स्वामि**समंतभद्र:** समंतभद्र: । सर्वथा परहितप्राणोहिताशायः महात्मा कदा भारतभूमिममूं विभूषयामासात्मवैदुष्येणेति नास्ति किमपि निर्णायकं गमकं ।

सांप्रतिकेतिवृत्तवेत्तॄणां मतमिदमस्य पावनात्मानो विषये यदजनिष्टायं षष्ठायां खीष्टशताब्दौ । नादिसंघपट्टावलीतश्च व्यज्ञायीदं समपद्यतायं सपादप्रथमायां शताब्दौ । कामयांचकार च **मैसूर**प्रांतस्थ**कांची-पुर**मवदाततयात्मनीनवासेन । परं नोभयत्रापि समयनिर्णये प्रत्यायकं किमपि सुनिर्णेयं प्रमाणं । किंतु नात्र संशीति: प्रथादिमहीधराशानिनानेन मुनिना भवितव्यं नियतं प्रखरविदुषा चिरंतनतमेन च । जनश्रुतिरप्येतद्विषयिणीयं—

आसीत्किल विविधमतिमन्त्रिकरपरिपालितानिदेश: शेमुषीमंथनमथितानैकागमोदधिसमवाप्तानवद्यसुधापरिपूरितस्वांत: श्रीसमंतभद्रो भगवान् मुनिराट् । स चैकदा पुरा समुपार्जितनैकाशुभकर्मसंपातात् समुपात्तप्रखरभस्मव्याधि: कठिनतमं मुनिव्रतं परिपालयितुमशक्नुवन् व्याधिपरिहरणाधिया विमुच्य मुनिलिंगं समियाय वाराणस्यां । तदात्वे च वाराणस्यां कश्चित् स्वप्रतापपराभूतविबुधपति: शिवकोटिमहीपतिरासीत् स च परमशैवत्वात् विनिर्माय कमपि शिवालयं समादिशत् बहुलसुरसमोदकादिसामग्र्या शिवमर्चयितुं । यदा तु समंतभद्र: समश्रौषीत् बहुलया सामग्र्या शिवस्य पूजां तदाधिकं मनसि तुतोष । समेत्य च नरपतिशिवकोटिपरिषदि, उपदर्श्य कमपि लोकेतरातिशयं, प्रपेदे शिवपूजकपदं राजानुमत्या । भक्षंश्च सुरसपदार्थजातं शमयामास च स्वोदरव्याधिं सानंदं । कियता कालेन व्याधिस्तस्योपशशाम । व्याध्युपशमे च कदाचित्पुन: शिवकोटिपरिषदि समागत्य, आविर्भाव्य च विचित्रातिशयं स्वमंत्रवचनव्याहूताष्टमजिनचंद्रप्रभं चकार शिवकोटिमहीपतिं दिगंबरदीक्षादीक्षितं । भगवत्समंतभद्र: स्वव्याध्युपशमनकामनया वाराणसीप्राप्ति: पूर्वमपि बहुत्र बभ्राम । अतो यदा शिवकोटिमहीपति: स्वामिपरिचिकीर्षया तदीयवृत्तमप्राक्षीत् तदा परिचायित: स पद्येनामुना स्वामिना ।

> कांच्यां नग्नाटकोऽहं मलमलिनतनुर्लांबुशे पांडुपिंड:
> पुंड्रोड्रे शाक्यभिक्षुर्दशपुरनगरे मिष्टभोजी परिव्राट् ।
> वाराणस्यामभूवं शशधरधवल: पाण्डुरांगस्तपस्वी
> राजन् यस्यास्ति शक्ति: स वदतु पुरतो जैननिर्ग्रंथवादी ॥१॥
>
> नेमिचंद्र वर्णिरचिताराधनासारस्थं पद्यमिदं

मल्लिषेणप्रशस्तौ च समुल्लेखोऽयं स्वामिविषयक:—

> वंद्यो भस्मकभस्मसात्कृतिपटु: पद्मावतीदेवता—
> दत्तोदात्तपद: स्वमंत्रवचनव्याहूतचंद्रप्रभ: ।

आचार्यः स समंतभद्रगणभृद्येनेह काले कलौ
जैनं वर्त्म समंतभद्रमभवद्भद्रं समंतान्मुहुः ॥ १ ॥

शिवकोटिनरपतिपुरस्तादात्मनीनपरिचयः—

पूर्वं पाटलिपुत्रमध्यनगरे भेरी मया ताडिता
पश्चान्मालवसिंधुढक्कविषये कांचीपुरे वैदिशे ।
प्राप्तोऽहं करहाटकं बहुभटं विद्योत्कटं संकटं
वादार्थी विचराम्यहं नरपते शार्दूलविक्रीडितं ॥ १ ॥
अवटुतटमटति झटिति स्फुटचटुवाचाटधूर्जटेर्जिह्वा
वादिनि समंतभद्रे स्थितवति सति का कथान्येषां ॥ २ ॥

यद्यपि परात्मनः किलैतस्य स्वामिनः न क्वापि दृष्टिपथमवतरति नियतसमयादिसमुल्लेखस्तथापि तत्कृतिव्यामुग्धप्रतिभैः प्रशास्ययमनेकैर्गरीयोभिराचार्यैः—

नमः समंतभद्राय महते कविवेधसे यद्वचोवज्रपातेन निर्भिन्नाः कुमताद्रयः ॥ ४३ ॥
कवीनां गमकानां च वादिनां वाग्मिनामपि यशःसामंतभद्रीयं मूर्ध्नि चूडामणीयते ॥ ४४ ॥

अमोघवर्षगुरुः, महापुराणकर्ता भगवज्जिनसेनाचार्यः

सरस्वतीस्वैरविहारभूमयः समंतभद्रप्रमुखा मुनीश्वराः ।
जयंति वाग्वज्रनिपातपाटितप्रतीपराद्धांतमहीध्रकोटयः ॥

महाकविश्रीवादीभसिंहः

लक्ष्मीभृत्परमं निरुक्तिनिरतं निर्वाणसौख्यप्रदं
कुज्ञानातपवारणाय विधृतं छत्रं यथा भासुरं ।
सज्ज्ञानैर्नययुक्तिमौक्तिकरसैः संशोभमानं परं
वंदे तद्धतकालदोषममलं सामंतभद्रं मतं ॥

श्रीवसुनंदिसैद्धांतिकचक्रवर्ती

समंतभद्रादिकवींद्रभास्वतां स्फुरंति यत्रामलसूक्तिरश्मयः
व्रजंति खद्योतवदेव हास्यतां न तत्र किं ज्ञानलवोद्धता जनाः ।

श्रीज्ञानार्णवकर्ता श्रीशुभचंद्राचार्यः

गुणान्विता निर्मलवृत्तिमौक्तिका नरोत्तमैः कंठविभूषणीकृता
न हारयष्टिः परमेव दुर्लभाः समंतभद्रादिभवा च भारती ।

महाकविश्रीवीरनंदी

शिवकोटेर्जैनत्वनिर्णायको वरीवर्ति सांप्रतमपि तन्निर्मितः प्राकृतभाषायां–**भगवत्याराधनासाराभिधः** परमग्रंथः । विद्यते च तत्र मुनिधर्मसमुपवर्णना । शिवकोटिमहीपतिः कदा शशास भारतीविभूषितां वाराणसीमिति निश्चितौ तु नियतं स्वामिसमंतभद्रसमयो निर्णीतःस्यात् ।

**समंतभद्राभिधयाऽपरोऽप्याचार्यः** प्रतिश्रुतो वर्तते यस्य चिंतामणिव्याकरणस्य टिप्पणी, अष्टसहस्रीविषमपदव्याख्येतिग्रंथद्वयमुपलभ्यते । यद्ययमपरः समंतभद्रः षष्ठतमायां शताब्दौ भवेद्विनिर्णीतस्तदा न क्वापि क्षतिः ।

## स्वामिसमंतभद्रनिर्मितग्रंथाः ।

गंधहस्तिमहाभाष्यं १ देवागमस्तोत्रं २ जिनसत्तालंकारः ३ विजयधवलटीका ४ तत्त्वानुशासनं ५ युक्त्यनुशासनं ६ बृहत्स्वयंभूस्तोत्रं ७ जिनशतकमित्यादयः ।

देवागमस्तोत्रस्यैवापराभिधा—आप्तमीमांसा—नायं स्वायत्ततया विरचितो ग्रंथः किंतु गंधहस्तिमहाभाष्यस्य मंगलाचरणं। भाष्यस्य चतुरशीतिसहस्रपरिमिता ८४००० श्लोकसंख्या। श्रीमदुमास्वामिशयकुशेशयखचिततत्त्वार्थाधिगमसूत्रस्यो (मोक्षशास्त्रस्य) परिष्टात्तद्भाष्यं। दुर्भागधेयमेतदास्माकीनं यन्नो दृष्टिपथमायाति तत्सांप्रतं।

एतस्याः किलाप्तमीमांसाया उपरि कृता सैद्धांतिकचक्रवर्तिना श्रीमद्वसुनंदिना पदवृत्तिः। विरचिता च श्रीमदकलंकदेवस्वामिना भाष्यभूताष्टशती स्वातंत्र्येण कारिकाणामुपरि। विरचयामास चाष्टशत्युपरि-अष्टशतीनाम्नीं विवृतिं श्रीमद्विद्यानंदिप्रभुः। भूमंमलं कदा मंडयायासात्मपाण्डित्येन श्रीमदकलंकदेवस्वामीति तु समाविर्भावयामोवयं श्रीमत्तत्त्वार्थराजवार्तिकप्रस्तावनोल्लेखसमये। प्रभोर्विद्यानंदिनस्तु व्यलेख्याप्तपरीक्षाप्रस्तावनायामवदाततयास्माभिरिति वृत्तं।

## प्रमाणपरीक्षा।

अत्रांकेऽपरः प्रमाणपरीक्षाभिधोग्रंथः। रचयिता किलैतद्ग्रंथरत्नस्य समजनि श्रीमद्विद्यानंदिप्रभुः महच्चित्रमेताद्विरचयंतोऽप्यतलस्पर्शगभीरग्रंथमिमं श्रीमद्विद्यानंदाः न प्रकटयांचक्रिरे स्वनामविवृतिं क्वापि यशोलिप्सया तथापि—

जयंति निर्जिताशेषसर्वथैकांतनीतयः।<br>सत्यवाक्याधिपाः शश्वद्विद्यानंदा जिनेश्वराः॥ १॥

इत्यत्र जिनेश्वरविशेषणीभूतेन विद्यानंदपदेन—

**७७ तमेपृष्ठे—तस्यानादेरेकस्येश्वरस्याप्तपरीक्षायामुपाक्षिप्तत्वादिति** वाक्ये आप्तपरीक्षापदोल्लेखेन—आप्तपरीक्षापत्रपरीक्षेतिग्रंथद्वयस्य समानकर्तृकत्वप्रतिभासकत्वात्—अंत्यमंगले च विद्यापददानान्निश्चितं विज्ञायतेऽस्माभिरयमेव श्रीविद्यानंदप्रभुः प्रमाणपरीक्षायाः कर्ता।

ग्रंथसंपादनसमये अष्टशत्याः पुस्तकद्वयं मया मोहमयीतः समुपलब्धं तत्र क. पुस्तकस्य शुद्धतरत्वेपि ख. पुस्तकमतीवाशुद्धमासीत्। ततोऽन्वभूवं वहलं कष्टं कठिनतमाप्तमीमांसाग्रंथसंपादनकाले।

प्रमाणपरीक्षायाः क. पुस्तकं जैनहितैषिसंपादकश्रीमत्पंडित**नाथूरामजी**महानुभावैः—

ख. पुस्तकं च स्याद्वादमहाविद्यालयप्रधानाध्यापकैः श्रीमत्पंडित-**उमरावसिंह**जीमहोदयैः प्रहितमिति विहितानुग्रहोऽस्म्युक्तविदुषोः। यदपि पंडितंमन्याधुनिकलेखकतदनुयायिमहोदयालुकंपया प्रमाणपरीक्षायाः पुस्तकद्वयमप्यतीवाशुद्धं तदपि—एकतः संजातशंकाया अपरतः समाधानात् समपादि महता प्रयासेनेयं प्रमाणपरीक्षा। तथापि प्रमत्तयोगादजनिष्ट क्वापि स्खलनं मामकीनं क्षमयंतु तदशक्यपरिमार्जनस्खलनं साक्षरवरा इति सनतिमभ्यर्थना। लेखकादिमहानुभावकरकमलखचितग्रंथमाहात्म्यात्—असामयिकवैकल्यतश्च विनिचाय्य कुतोऽपि मामकीनं स्खलनं कठिनतमसंपादनकृत्यानुभवबहिर्भूतत्वात् वेधयंति केचित्खरतरकुवचनसायकैः संपादकं। शिक्षयितृत्वे तेषामनुगृहीतोऽस्मि।

**प्रियमित्रवर देवराज!** पठिष्यामीति तावकाग्रहवशंवदतया महतायासेन संपादितापीयं प्रमाण परीक्षा—असामयिकभवन्निधनतो दुनोति मामकीनं मनो बहुलतया।

अवदातहृदय! न तावकीनोपकारविनिमये किमपि मत्पार्श्वे समीचीनं वस्तु येन विगतोपकारभारः स्यां—ततस्त्वद्गुणस्मृतिसमीहया समर्पयामि तव **करकमलयोः** श्रीप्रमाणपरीक्षामिमां सविनयं—एहि परमनिश्रेयसं त्वमिति मे कामना।

विद्वत्कृपाभिलाषी

**गजाधरलालः**

इत्याप्तमीमांसा समाप्ता

## अथ प्रमाणपरीक्षा।

**विषयानुक्रमणिका**



नमः सिद्धेभ्यः।

७

श्रीमद्भगवत्समंतभद्रस्वामिविरचिता

# आप्तमीमांसा। 368SA.

**देवागमनभोयानचामरादिविभूतयः।**
**मायाविष्वपि दृश्यंते नातस्त्वमसि नो महान्॥ १॥**

वृत्तिः-सार्वश्रीकुलभूषणं क्षतरिपुं सर्वार्थसंसाधनं सन्नीतेरकलंकभावविधृतेः संस्कारकं सत्पथं।
निष्णातं नयसागरे यतिपतिं ज्ञानांशुसद्भास्करं भेत्तारं वसुपालभावतमसो वंदामहे बुद्धये॥ १॥
लक्ष्मीभृत्परमं निरुक्तिनिरतं निर्वाणसौख्यप्रदं कुज्ञानातपवारणाय विधृतं छत्रं यथा भासुरं।
सज्ज्ञानैर्नययुक्तिमौक्तिकफलैः संशोभमानं परं वंदे तद्धतकालदोषममलं सामंतभद्रं मतं॥२॥

समीचीनासमीचीनोपदेशविशेषप्रतिपत्तये सकलदोषातीतानंतचतुष्टयसमेतप्रकटिताशेषद्रव्यपर्यायसामान्यविशेषपरमात्मपरीक्षाभिधायकं, असंख्यातगुणश्रेणिकर्मनिर्जरणोपायं निराकृतसामान्यापोहशब्दार्थगृहीतविद्वन्मनःसंतापकरं परमार्थभूतवाच्यवाचकसंबंधमनेकसूक्ष्मार्थप्रतिपादनचटुलं निःश्रेयसाभ्युदयसुखफलं स्वभक्तिसंभारप्रेक्षापूर्वकारित्वलक्षणप्रयोजनवद् गुणस्तवं कर्तुकामः श्रीमत्समंतभद्राचार्यः सर्वज्ञं प्रत्यक्षीकृत्यैवमाचष्टे-हे भट्टारक! संस्तवो नाम माहात्म्यस्याधिक्यकथनं, त्वदीयं च माहात्म्यमतींद्रियं मम प्रत्यक्षागोचरं-अतः कथं मया स्तूयसे?। अत आह भगवान् 'ननु भो वत्स! यथाऽन्ये देवागमादिहेतोर्मम माहात्म्यमवबुध्य स्तवं कुर्वन्ति तथा त्वं किमिति न कुरुषे?। अत आह,-अस्माद्धेतोर्न महान् भवान् मां प्रति' व्यभिचारित्वादस्य हेतोः। इति व्यभिचारं दर्शयति—

देवास्त्रिदशास्तेषां स्वर्गावतरण-जन्म-निष्क्रमण-केवलज्ञानोत्पत्ति-मुक्तिगमनस्थानेषु आगमनं-आगमः अवतारः-देवागमः। नभसि गगने हेममयाम्भोजोपरि यानं नभोयानम्। चामराणि वातायनानि तानि आदिर्यासां विभूतीनां संपदां ताश्च ता विभूतयश्च चामरादिविभूतयः। आदिशब्देन अशोकवृक्षसुरदुंदुभिसिंहासनादीनि परिगृह्यंते, एतेषां द्वंद्वः। विभूतयः। मायाविष्वपि इन्द्रजालेष्वपि दृश्यंते। न अतः-न अस्मात्। त्वमसि-त्वं भवसि। नः-अस्माकं महान्-गुरुः। किमुक्तं भवति। देवागमादिहेतोर्नास्माकं भवान्गुरुर्भवति। यतो देवागमादयः, पूरणादिष्वपि दृश्यंते। अतोऽनैकांतिको हेतुः॥ १॥

अथ मतम्। अयं तर्हि हेतुर्बहिरंतरंगलक्षणो महोदयः पूरणादिष्वसंभवी इत्ययमपि व्यभिचारी, तथैव प्रतिपादयति—

अष्टशती-उद्दीपीकृतधर्मतीर्थमचलज्योतिर्ज्वलत्केवलालोकालोकितलोकालोकमखिलैरिंद्रादिभिर्वंदितं॥

वंदित्वा परमार्हतां समुदयं गां सप्तभंगीविधिं स्याद्वादामृतगर्भिणीं प्रतिहतैकांतांधकारोदयां ॥ १ ॥
तीर्थं सर्वपदार्थतत्त्वविषयस्याद्वादपुण्योदधेर्भव्यानामकलंकभावकृतये प्राभावि काले कलौ ॥
येनाचार्यसमंतभद्रयतिना तस्मै नमः संततं कृत्वा विव्रियते स्तवो भगवतां देवागमस्तत्कृतिः ॥२॥

देवागमेत्यादिमंगलपुरस्सरस्तवविषयपरमात्मगुणातिशयपरीक्षामुपक्षिपतैव स्वयं श्रद्धागुणज्ञताल-क्षणं प्रयोजनमाक्षिप्तं[1] लक्ष्यते तदन्यतरापायेऽर्थस्यानुपपत्तेः[2] । शास्त्रन्यायानुसारितया[3] तथैवोपन्यासात्—!

आज्ञाप्रधाना हि त्रिदशागमादिकं परमेष्ठिनः परमात्मचिह्नं प्रतिपद्येरन् नास्मदादयः[4] तादृशो[5] माया-विष्वपि भावात्, इत्यागमाश्रयः[6] ॥ १ ॥

अध्यात्मं बहिरप्येष विग्रहादिमहोदयः ।
दिव्यः सत्यो दिवौकस्स्वप्यस्ति रागादिमत्सु सः ॥ २ ॥

वृत्तिः—आत्मनि अधि अध्यात्मं । सः अंतः । क्षुत्पिपासाजरारुजापमृत्व्याद्यभाव इत्यर्थः । बहिरपि बाह्योऽपि । एषः प्रत्यक्षनिर्देशः । विग्रहो दिव्यशरीरमादिर्येषां, निस्वेदत्व–निर्मलत्व–अच्छायत्वादीनां तानि विग्रहादीनि तेषां तान्येव वा महोदयः, विभूतेः पूर्वावस्थाया अतिरेको-ऽतिशयो वा विग्रहादिमहोदयः, स्वमानुषातिशय इत्यर्थः । दिवि भवो दिव्यः । सत्यः अवितथः, मायास्वरूपो न भवति । दिवि द्यौ दिवि ओकः अवस्थानं येषां ते दिवौकसः नाकसदनाः, तेष्वपि दिवौ-कस्स्वपि । अथवा दिवाशब्दोयं तेनैष्टव्यः । रागो लोभमायेत्यादिर्येषां द्वेषादीनां ते रागादयः ते संति येषां ते रागादिमंतः, तेषु रागादिमत्सु अक्षीणकषायेष्वित्यर्थः । स महोदय इति । अयं महोदयो यद्यपि समासेऽतर्भूतस्तथापि अध्यात्ममहोदय इति संबंधः कर्तव्यः अंत्यस्य श्रुतत्वात् । अथवा बहिर्विग्रहादि-महोदयः अध्यात्मं च । किमुक्तं भवति । योऽपि विग्रहादिमहोदयो मायाविष्वसंभवी हेतुत्वेनोपन्यस्तः सोऽपि व्यभिचारी । स्वर्गिषु संभवात् ॥ २ ॥

द्वयोर्हेत्वोरनैकांतिकत्वं प्रदर्श्य अन्यैर्यस्तीर्थकरत्वेनोपन्यस्तस्तस्य हेतोरसाधकत्वं सर्वासर्वज्ञत्वं प्रदर्शयन्नाह—

अष्टशती—बहिरंतः शरीरादिमहोदयोऽपि पूरणादिष्वसंभवी व्यभिचारी, स्वर्गिषु भावादक्षीणकषायेषु । ततोऽपि न भवान् परमात्मेति स्तूयते ॥ २ ॥

तीर्थकृत्समयानां च परस्परविरोधतः ।
सर्वेषामाप्तता नास्ति कश्चिदेव भवेद्गुरुः ॥ ३ ॥

वृत्तिः—तीर्थं संसारनिस्तरणोपायं करोतीति तीर्थकृत् । यतस्तीर्थकृत् भवान् अतः सर्वज्ञः । इत्ययमपि हेतुरनैकांतिकः सुगतादिषु दर्शनात् इत्यनुक्तोऽपि द्रष्टव्यः । अस्मिन्नवसरे वैनयिकः प्राह—इष्टमस्माकं सर्वेषां सर्वज्ञत्वम् । अत आह—समयानां च परस्परविरोधतः अन्योऽन्यविसंवादात्, सर्वेषामाप्तता नास्ति–विश्वेषां सर्वज्ञत्वं न भवति । अथवा तीर्थकरत्वात्सर्वज्ञो न भवति, सुगतादिषु दर्शनात् । अतः सर्वे सर्वज्ञाः संतु इत्येतत्सर्वमुक्त्वा पश्चादिदं वक्तव्यं सर्वेषामाप्तता नास्ति । कुतः ? यतस्तीर्थकृतां तत्स-मयानां च परस्परविरोधात् स्वरूपपदार्थविवाददर्शनात् । अत्रावसरे सर्वज्ञाभाववादी प्राह—सत्यं युक्तमेव न कश्चित् सर्वदर्शी इति ? । अत आह—कश्चिदेव–कोऽप्येव तेषां मध्ये भवेत्, स्यात् गुरुः–महान् स्वामी ।

---

१ प्रतिज्ञातं स्वीकृतं २ देवागमस्तवस्य ३ अनुपपत्तिः कुत इत्यत आह ४ परीक्षाप्रधानाः ५ देवगमादिचिह्नस्य । ६ । इति हेतोः । देवागमादिविभूतित्वेनः महान् इत्ययं ।

किमुक्तं स्यात् । न सर्वेषामाप्तता परस्परविरोधात्समयानामागमानां । एकोऽपि न भवति प्रमाणाभावात् । अतः केन चिदेव भवितव्यं । एवमत्यन्ताभावाभावः कृतः । यदि परस्परविरोधात्सर्वज्ञत्वभावो न भवति तर्हि येषां सर्वज्ञविच्छेदकः संप्रदायस्तेषामाप्तता स्यात् ? अत आह—तीर्थकृदित्यादि । तीर्थं सर्वज्ञं कृंतंति छिंदंति इति तीर्थकृतः समया आम्नायाः सम्प्रदाया येषां ते तीर्थकृत्समयास्तेषां अन्योऽन्यविरोधात् । सर्वं निरवशेषं अवगतं अगम्यावगमनं वा इच्छंति अभ्युपगच्छंति इति सर्वेप्सः तेषां सर्वेषां आप्तता परमार्थवादित्वं नास्ति न विद्यते । अतः कः आत्मजीवः चिच्चेतनोऽचेतनो भवत्येव । एवकारः अवधारणार्थः ॥ भवं संसारं यांति गच्छंति इति भवेताः तेषां भवेतां शक्रचक्रधरादीनामित्यर्थः । गुरुर्नाथः । भवेद्गुरुः भवेतां गुरुः । न च लब्धात्मस्वरूपाणां । किमुक्तं भवति—तीर्थकृच्छेदकाम्नायानामपि सर्वमेकेन प्रमाणेन षड्भिरभ्युपगच्छतां आप्तता नास्ति परस्परविरोधात् । अतो यतिप्रतिरेव स्यान्नान्यः ॥ ३ ॥

पूर्वकारिकोपात्तमर्थं समर्थयन्सुपुष्कलहेतुमाह—

अष्टशती-न हि तीर्थकरत्वमाप्ततां साधयति शक्रादिष्वसंभवि, सुगतादिषु दर्शनात् । न च सर्वे सर्वदर्शिनः परस्परविरुद्धसमयाभिधायिनः । ततोऽनैकांतिको हेतुः । अत एव न कश्चित् सर्वज्ञः—इत्ययुक्तं श्रुतेरविशेषादप्रमाणतोपपत्तेः । तथेष्टत्वाददोष इत्येकेषामप्रामाणिकैवेष्टिः, न खलु प्रत्यक्षं सर्वज्ञप्रमाणांतराभावविषयं अतिप्रसंगात् । नानुमानमसिद्धेः । प्रमाणतः सिद्धं नानात्मसिद्धं नाम—अन्यथा परस्यापि न सिद्ध्येत् । तदिमे स्वयमेकेन प्रमाणेन सर्वं सर्वज्ञरहितं पुरुषसमूहं संविदंतः एवात्मानं निरस्यंतीति व्याहतमेतत् । तीर्थच्छेदसंप्रदायानां तथा सर्वमवगतमिच्छतामाप्तता नास्ति परस्परविरुद्धाभिधानात् । एकानेकप्रमाणवादिनां स्वप्रमाण्यावृत्तेरन्यथानैकांतिकत्वात् । सर्वप्रमाणविनिवृत्तेरितरथासंप्रतिपत्तेः । वागक्षबुद्धीच्छापुरुषत्वादिकं कश्चिदनाविलज्ञानं निराकरोति न पुनस्तत्प्रतिषेधवादिषु तथेति परमगहनमेतत् । तदित्थं सिद्धं सुनिश्चितासंभवद्बाधकप्रमाणत्वं । तेन कः परमात्मा? चिदेव लब्ध्युपयोगसंस्काराणामावरणनिबंधनानामत्यये भवभूतां प्रभुः, न हि सर्वज्ञस्य निराकृतेः प्राक् सुनिश्चितासंभवसाधकप्रमाणत्वं सिद्धं येन परः प्रत्यवतिष्ठेत । नापि बाधकासंभवात्, परं प्रत्यक्षादेरपि विश्वासनिबंधनमस्ति तत्प्रकृतेऽपि सिद्धं, यदि तत्सत्तां न साधयेत् सर्वत्राप्यविशेषात् । तदभावे दर्शनं नादर्शनमतिशेतेऽनाश्वासाद्विभ्रमवत् । साधकबाधकप्रमाणयोर्निर्णयाद्भावाभावयोरविप्रतिपत्तिरनिर्णयादारेका स्यात् । न खलु ज्ञस्वभावस्य कश्चिदगोचरोऽस्ति यन्न क्रमेत तत्स्वभावांतरप्रतिषेधात् । चेतनस्य सतः संबंध्यतरं मोहोदयकारणकं मदिरादिवत्, तदभावे साकल्येन विरतमोहः सर्वं पश्यति प्रत्यासत्तिविप्रकर्षयोरकिंचित्करत्वात् अत एवाक्षानपेक्षा । अजनादिसंस्कृतचक्षुषो यथालोकानपेक्षा ॥३॥

**दोषावरणयोर्हानिर्निःशेषाऽस्त्यतिशायनात् ।**
**क्वचिद्यथा स्वहेतुभ्यो बहिरंतर्मलक्षयः ॥ ४ ॥**

**वृत्तिः**—दोषः अज्ञानादि, कार्यरूपं । आवरणं कारणभूतं कर्म । अथवा मोहांतराया दोषाः । ज्ञानदर्शनावरणे आवरणं । तयोर्हानिर्विनाशो विश्लेषो दोषावरणयोर्हानिः । सिद्धसाधनतानिराकरणार्थं निःशेषा समस्ता समूलतलप्रहाणिः इत्युक्तं । अस्ति भवति । अतिशायनात् प्रकृष्यमाणाज्ञानहानेः पूर्वावस्थातिरेकात् । क्वचित् कस्मिंश्चित्पुरुषविशेषे । यथा शब्दो दृष्टान्तप्रदर्शनफलः । स्वस्य आत्मनो हेतवः कारणानि ते तथाभूतास्तेभ्यः स्वहेतुभ्यः । बहिः किट्टकादिकं, अभ्यतरं कालिमादि तच्च तन्मलं च तस्य

---

१ भवितव्यमेवात्यंताभावाभावः कृतः पाठोऽयं लिखितपुस्तके । २ लिखित पुस्तके नचालब्धात्मस्वरूपाणामिति पाठः । ३ चार्वाकानां । ४ जैनस्यापि । ५ वैनायिकानां । ६ अर्थग्रहणशक्तिर्लब्धिः अर्थग्रहणव्यापार उपयोगः । ७ मीमांसकः । ८ सिद्धसाध्यतेति लिखितपुस्तके पाठः ।

क्षयो विनाश: विश्लेष: बहिरंतर्मलक्षय: । एतदुक्तं भवति । कस्मिंश्चिद्धातिशायनाद्दोषावरणयोर्हानिरस्ति । यथा धातुपाषाणस्य अंतर्मलक्षय: । न कश्चिन्नवस्तेन गुरुरिति संबंध: । एकत्र स्वहेतव: सम्यग्दर्शनादय: । अन्यत्र पिण्डीबन्धनप्रयोगादय: । तथा एकत्र बहिर्मल: शरीरेन्द्रियादिकं । अन्तर्मल: कर्म । अन्यत्र बहिर्मल: किट्टकादिकं । अन्तर्मल: कालिमादि ॥ ४ ॥

ननु विध्वस्तदोषोऽप्यात्मा कथं विप्रकर्षिणमर्थं प्रत्यक्षीकुर्यात् ? । (इति शङ्कायां) साधनान्तरस्य बाधकाभावस्य भावनिरूपणमाह—

अष्टशती-वचनसामर्थ्यादज्ञानादिर्दोष: स्वपरपरिणामहेतु:, अत एव क्वचिदौ नि:शेषदोषावरणनिवृत्ते: सिद्धसाधनंत्वसमीक्षितानिधानं साध्यापरिज्ञानात् । दोषावरणयोर्हानिरतिशायनात् । निश्शेषतायां साध्यायां बुद्धेरपि किं न परिक्षय: स्याद्विशेषाभावात् । अतोनैऽकांतिको हेतुरित्यशिक्षितलक्षितं चेतनगुणव्यावृत्ते: सर्वात्मना पृथिव्यादेरभिन्नत्वात् । अदृश्यानुपलंभादभावासिद्धिरित्ययुक्तं परचैतन्यनिवृत्तावारेकापत्ते: संस्कर्तृणां पातकित्वप्रसंगात् । बहुलमप्रत्यक्षस्यापि रोगादेर्विनिवृत्तिनिर्णयात् । व्यापारव्याहाराकारविशेषव्यावृत्तिलिङ्गस्य ताद्दशं लोको विवेचयति । व्यापारव्याहाराकारविशेषव्यावृत्तेरिति समयबलात्तत्सिद्धांतविल्लोको विवेचयति । यदि पुनरयं निर्बंध: सर्वत्र विप्रकर्षिणामभावासिद्धे:, तदा कृतकत्वधूमादेर्विनाशानलाभ्यां व्याप्तेरसिद्धेर्न कश्चिद्धेतु: । तत: शौद्धोदनिशिष्यकाणामनात्मज्ञानमेतत्, अनुमानोच्छेदप्रसंगात् । तथाहि, यस्य हानिरतिशयवती तस्य कुतश्चित्सर्वात्मना व्यावृत्तिर्यथा बुद्ध्यादिगुणस्यात्मन: । तथा च दोषादेर्हानिरतिशयवती कुतश्चिन्निवर्तयितुमर्हति, सकलं कलंकमिति कथमकलंकसिद्धिर्न भवेत् । मणेर्मलादेर्व्यावृत्ति: क्षय: सतोऽत्यंतविनाशानुपपत्ते:, तादृगात्मनोऽपि कर्मणां निवृत्तौ परिशुद्धि:, । कर्मणोऽपि वैकल्यमात्मकैवल्यमस्त्येव ततो नातिप्रसज्यते । प्रतिपक्ष एवात्मनामागन्तुको मल: परिक्षयी स्वनिर्ह्रासनिमित्तविवर्द्धनवशात् ॥ ४ ॥

ननु निरस्तोपद्रव: सन् आत्मा कथमकलंकोऽपि विप्रकर्षिणमर्थं प्रत्यक्षीकुर्यात् ?—

सूक्ष्मान्तरितदूरार्था: प्रत्यक्षा: कस्य चिद्यथा ।
अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थिति: ॥ ५ ॥

वृत्ति:—सूक्ष्मा: स्वभावविप्रकृष्टा: । अंतरिता: कालविप्रकृष्टा: । दूरा: देशविप्रकृष्टा: । ते च ते अर्थाश्च सूक्ष्मान्तरितदूरार्था: । तथा च स्वभावविप्रकृष्टा मन्त्रौषधिशक्तिचित्तादय: । कालविप्रकृष्टा लाभालाभसुखदु:खग्रहोपरागादय: । देशविप्रकृष्टा मुष्टिस्थादिद्रव्यम् । दूरा हिमवन्मंदरमकराकरादय: । प्रत्यक्षा: अध्यक्षा: प्रत्यक्षज्ञानगोचरा: कस्यचित् । सामान्यकथनमेतत् । अनिर्दिष्टनामधेयस्य—यथा दृष्टांतप्रदर्शक: अनुमेया: अनुमानगम्या: । अथवा अनुगतं मेयं मानं येषां ते अनुमेया: प्रमेया इत्यर्थ: । तेषां भावस्तस्मादनुमेयत्वत: । अग्नि: पावक: आदिर्यस्यासावग्न्यादि: । इत्येवमनेन प्रकारेण सर्वज्ञस्य विश्वदर्शिन: संस्थितिर्व्यवस्था सर्वज्ञसंस्थिति: सर्वज्ञास्तित्वमित्यर्थ: । भागासिद्धानैकांतिकविरुद्धहेत्वाभासाभावात् । ये ये प्रमेयास्ते ते प्रत्यक्षा: । यथा अग्न्यादय: । प्रमेयाश्च स्वभावकालदेशविप्रकृष्टा अर्था: कस्य चित्पुरुषविशेषस्य तस्मात्तेऽपि प्रत्यक्षा: । अथवा ये अनुमानगम्यास्ते प्रत्यक्षा: कस्य चित् । यथा अग्न्यादय: । अनुमानगम्याश्च सूक्ष्मान्तरितदूरार्थास्तस्मात्तेऽपि प्रत्यक्षा: । सुनिश्चितासंभवद्बाधकप्रमाणस्य समर्थनमेतत् ।

विगतकर्मकलङ्कोऽपि विप्रकृष्टार्थदर्शी सामान्येन य: प्ररूपित: स क: ? इति विशेषं दर्शयन्नाह—

अष्टशती-स्वभावकालदेशविप्रकर्षिणां अनुमेयत्वमसिद्धमिति—अनुमानमुत्सारयति । यावान् कश्चिद्भाव: स सर्व: क्षणिक:—इत्यादिव्याप्तेरसिद्धौ प्रकृतोपसंहारायोगात् । अविप्रकर्षिणामनुमतेरानर्थक्यात् । सत्त्वादेरनित्यत्वादिव्याप्तिमिच्छतां सिद्धमनुमेयत्वमनवयवेनेति न किंचिद्व्याहतं पश्याम: । तेऽनुमेया:—न कस्य चि-

१ विप्रकर्षेण लि. पु. पाठ: । २. आग्रह: ।

अत्यक्षश्च स्युः किं व्याहन्यतं इति समानमन्यादीनां तथा चानुमानोच्छेदः स्यात् । तदभ्युपगमे–अस्वसंवेद्यविज्ञानव्यक्तिभिरध्यक्षं किं लक्षयेत् प्रमाणतया परमप्रमाणतयेति न किंचिदेतत्तया नैतत्तया वा यमभ्युपगंतुमर्हति । तदेवं प्रमेयत्वसत्त्वादिर्हेतुलक्षणं पुष्णाति तं कथं चेतनः प्रतिषेद्धुमर्हति, संशयितुं वा । धर्मिण्यसिद्धसत्ताके भावाभावोभयधर्माणामसिद्धविरुद्धानैकांतिकत्वात् कथं सकलविदि सत्त्वासिद्धिः ? इति ब्रुवन्नपि देवानांप्रियः–तद्धर्मिस्वभावं न लक्षयति । शब्दानित्यत्वसाधनेऽपि कृतकत्वादावयं विकल्पः किं न स्यात् ? । विमत्यधिकरणभावापन्नविनाशधर्मिधर्मत्वे कार्यत्वादेरसंभवद्बाधकत्वादेरपि संदिग्धसद्भावधर्मिधर्मत्वं सिद्धं बोद्धव्यं । यदि विप्रकृष्टार्थप्रत्यक्षत्वमर्हतः साध्येत पक्षदोषः–अप्रसिद्धविशेषणत्वं तत एव व्याप्तिर्न सिद्ध्येत् । अनर्हतश्चेत्–अनिष्टानुषंगोऽपि कः पुनः सामान्यात्मा तदुभयव्यतिरेकेण, यस्य विवक्षितार्थप्रत्यक्षत्वं ?, इत्येतद्विकल्पजालं शब्दनित्यत्वेऽपि समानं न केवलं सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशीतौ वा, तदयमनुमानमुद्रां भिनत्ति । वर्णानां नित्यत्वमकृतकत्वादिना सर्वगतानां यदि साधयति ? । स्यादप्रसिद्धविशेषणः पक्षः । इतरथाऽनिष्टानुषंगः । कीदृक् पुनः सामान्यं नाम यदुभयदोषपरिहाराय प्रकल्प्येत, सर्वगतसाधनेऽपि समानं अविवक्षितविशेषस्य पक्षीकरणे समः समाधिः, इत्यलमप्रतिष्ठितमिथ्याविकल्पोपाधेः ॥ ५ ॥

स त्वमेवासि निर्दोषो युक्तिशास्त्राविरोधिवाक् ।
अविरोधो यदिष्टं ते प्रसिद्धेन न बाध्यते ॥ ६ ॥

वृत्तिः–स (पूर्वप्रक्रान्तः तच्छब्दः) पूर्वप्रक्रान्तपरामर्शी त्वमेव–भवानेव नान्यः । अन्ययोगव्यवच्छेदफल एवकारः । असि–भवसि । निर्दोषः–अविद्यारागादिविरहितः क्षुधादिविरहितो वा अनंतज्ञानादिसंबंधेन इत्यर्थः ? कुत एतत् । युक्तिशास्त्राविरोधिवाक् यतः । युक्तिः–अनुमानं न्यायः तैस्सहचरितं मध्यक्षमपि । शास्त्रं आगमः स्याद्वादः ताभ्यां अविरोधिनी अविसंवादिनी वाक् वाणी वचनं यस्यासौ युक्तिशास्त्राविरोधिवाक् । बहिर्व्याप्तिमंतरेणांतर्व्याप्त्या सिद्धं । यतः इयमेवान्यत्रापि प्रधाना । ननु वचनस्याऽविरोधः कुतः यावता यत्र वचनं तत्र विरोधो दृश्यते ? अत आह अविरोधः अविसंवादः । यत्–यस्मात् । इष्टं–मतं प्रवचनं । कुतो वीतरागस्य इच्छा ? उपचारेण, सयोगिध्यानवत् । इष्टशब्दस्यापि जहत्स्वार्थे वृत्तित्वात् कुशलशब्दवत् । ते–तव । प्रसिद्धेन परमतापेक्षं विशेषणमेतत् (परमतेन) अनेकांतवस्तुत्वेन । अथवा व्यवहिताव्यवहितप्रसिद्धलक्षणवता प्रमाणेन । न बाध्यते अन्यथा न क्रियते, तेनैव स्वरूपेण दृश्यत इत्यर्थः । किमुक्तं भवति–यो निर्दोषो विप्रकृष्टदर्शी स च त्वमेव भवसि । न्यायागमाविसंवादिवचनं । यतः अविरोधोऽपि, तव मतं न बाध्यते प्रसिद्धेन यस्मात् ।

ननु भो वत्स मदीयं मतं न बाध्यते अन्येषां किं बाध्यते ? अत आह–

विप्रकर्ष्यपि भिन्नलक्षणसंबंधित्वादिना कस्य चित्प्रत्यक्षं । सोऽत्र भवानर्हन्नेव–अन्येषां न्यायागमविरुद्धभाषित्वात् । विचित्राभिसंबंधितया व्यापारव्याहारादिसांकर्येण क्वचिदतिशयानिर्णये कैमर्थक्याद्विशेषेष्टिः ? ज्ञानवतोऽपि विसंवादात् क पुनराश्वासं लभेमहि ? । नचैवं वादिनः किंचिदनुमानं नाम निरभिसंधीनामपि बहुलं कार्यस्वभावाऽनियमोपलंभात् । सति काष्ठादिसामिग्रीविशेषे क्वचिद्दृष्टुपलब्धस्य तदभावे प्रायशोऽनुपलब्धस्य मण्यादिकारणकलापेऽपि संभवात् । यज्जातीयो यतः संप्रेक्षितस्तज्जातीयात्तादृगिति दुर्लभनियमितायां धूमधूमकेत्वादीनामपि व्याप्यव्यापकभावः कथमिव निर्णीयेत ? । वृक्षः शिंशपात्वात् इति

२ विज्ञानं स्वसंवेद्यं भूतपारिणामिता पित्तादिवत् ।
२ मुद्रितपुस्तकेऽयमधिकः पाठः । ३सहोच्चरितमित्यपि पाठः । ४ अभिप्रायतया । ५ वचनादि ।
६ अग्नेः । ७ अग्नेः । ८ सूर्यकांतमण्यादेः ।

लताचूतादेरपि क्वचिदेव दर्शनात् प्रेक्षावतां किमिव निश्शंकं चेतः स्यात् ? । तदेतद्दृष्टसंशयैकांतवादिनां विदग्धमर्कटकानामिव स्वलांगूलभक्षणं। यत्नतः परीक्षितं कार्यं कारणं नातिवर्तते ? इति चेत् स्तुतं प्रस्तुतं। ततोऽयं प्रतिपत्तेरपराधो नानुमानस्येति अनुकूलमाचरति । तदेवं तत्सुनिश्चितासंभवद्बाधकप्रमाणत्वमर्हत्येव सकलज्ञत्वं साधयति नान्यत्र, इत्यविरोध इत्यादिना स्पष्टयति। तत्रेष्टं मतं शासनमित्युत्तरचर्यते निराकृत-वाचोऽपि क्वचिदप्रतिषेधात् । नियमाभ्युपगमे सुषुप्त्यादावपि निरभिप्रायप्रवृत्तिर्न स्यात्। प्रतिसंविदिताका-रेच्छा तदा संभवंती पुनः स्मर्येत वांछांतरवत् । ततश्चैतन्यकरणपाटवयोः साधकतमत्वं सहकारिकारणांतरं न वै नियतमपेक्षणीयं नक्तंचरादेः संस्कृतचक्षुषो वा नापेक्षिताऽलोकसन्निधेरूपोपलंभात्। नचैवं संवित्क-रणपाटवयोरप्यभावविवक्षामात्रात्कस्यचिद्वचनप्रवृत्तिः प्रसज्यते संवित्करणवैकल्ये यथाविवक्षं वाग्वृत्तेरभावात्। नच दोषजातिस्तद्धेतुर्यतस्तां वाणीं नातिवर्तेत तत्प्रकर्षाप्रकर्षानुविधानाभावात् । बुद्ध्यादिवत्प्रमाणतः सिद्धं प्रसिद्धं तदेव कस्यचिद्बाधनं युक्तं विशेषणमेतत्परमतापेक्षं । प्रसिद्धेनाप्यनित्यत्वाद्येकांतधर्मेण बाधाकल्पनात्। नर्ते प्रमाणात्प्रतिबंधसिद्धेरभ्युपगमात्। नच परेषां प्रत्यक्षं—अग्निधूमयोः क्षणभंगसद्भा-वयोर्वा साकल्येन व्याप्तिं प्रति समर्थं—अविचारकत्वात् सन्निहितविषयत्वाच्च । नचानुमानं—अनवस्थानु-षंगात्। परोक्षांतर्भाविना नस्तर्केण संबंधो व्यवतिष्ठेत । तदप्रमाणत्वे न लैंगिकं समारोपव्यच्छेदाविशे-षात्। अधिगमोऽपि व्यवसायात्मैव तदनुपपत्तौ सतोऽपि दर्शनस्य साधनांतरापेक्षया संनिधानाभेदात्, सुषुप्तचैतन्यवत् ॥ ६ ॥

त्वन्मतामृतबाह्यानां सर्वथैकांतवादिनां
आप्ताभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते ॥ ७ ॥

**वृत्तिः**—त्वद्—युष्मन्मतमेव आगम एव अमृतं सर्वात्मप्रदेशसुखकारणं दुःखनिवृत्तिलक्षणस्य परमानं-दमुक्तिसुखस्य निमित्तं वा मतं अमृतं तस्माद्बाह्या बहिर्भूता मिथ्यादृष्टयः त्वन्मतामृतबाह्याः तेषां त्वन्मता-मृतबाह्यानां—युष्मदागमद्विषतां। सर्वथा सर्वप्रकारैः स्वरूपपररूपविधिप्रतिषेधात्मकैः एकान्तं एकं धर्मं नित्य-त्वादिकमेव वदितुं शीलं येषां ते सर्वथैकांतवादिनः तेषां सर्वथैकांतवादिनां एकस्वभावाभ्युपगच्छताम्। आप्ताः सर्वज्ञाः इति अभिमानः गर्वः अहंकारः तेन दग्धाः भस्मसात्कृताः प्रलयं नीताः, तेषां आप्ताभिमा-नदग्धानाम्। स्वस्य आत्मनः इष्टं मतं स्वेष्टं आत्माभ्युपगतप्रमाणप्रमाणफलं सर्ववस्तु । दृष्टेन प्रत्यक्षेण प्रत्य-क्षप्रमितेन अनेकान्तात्मवस्तुना वा, बाध्यते विरोधमुपनीयते अन्यथा क्रियत इत्यर्थः। किमुक्तं भवति। भवदागमबाह्या आप्ताभिमानदग्धाः सर्वथैकान्तवादिनः तेषां स्वेष्टं दृष्टेन बाध्यते। धर्मकीर्तिमतनिरासार्थ-मन्वयव्यतिरेकावुक्तवानाचार्यः। द्रव्यार्थिकपर्यायार्थिकानुग्रहार्थं वा ॥ ७ ॥

परवादिस्वेष्टस्य दृष्टेन बाधां प्रदर्श्य इदानीं स्वेष्टेन स्वेष्टस्य बाधां दर्शयितुमाह—

**अष्टशती**—अनेकांतात्मकवस्तुसाक्षात्करणं बहिरंतश्च सकलजगत्साक्षीभूतं विपक्षे प्रत्यक्षविरोधलक्षणं—अनेन दक्षयति—

न हि किंचिद्रूपांतरविकलं सदसन्नित्यानित्याद्येकांतरूपं संवेदनमन्यद्वा पश्यामो यथा प्रतिज्ञायते चित्रज्ञानवत्कथंचिदसंकीर्णविशेषैकात्मनः सुखादिचैतन्यस्य वर्णसंस्थानाद्यात्मनः स्कन्धस्य च प्रेक्षणात्। सामान्यविशेषैकात्मनः संवित्तिरेकांतस्यानुपलब्धिर्वा सर्वतः सिद्धा चक्षुरादिमतामनार्हतकल्पनामस्तं गम-यति इति किं नः प्रमाणांतरेण। न हि दृष्टाज्ज्येष्ठं गरिष्ठमिष्टं तदभावे प्रमाणांतराप्रवृत्तेः समारोपविच्छे-दविशेषात् अन्वयव्यतिरेकयोः स्वभावभेदप्रदर्शनार्थत्वाच्च । अनेकांतैकांतयोरुपलंभानुपलंभयोरेकत्वप्रदर्श-

---

१ प्रस्तुतं। २ समर्पितं। ३ अविनाभावः। ४ सौगतानां। ५ निर्विकल्पकत्वात्। ६ बौद्धाचार्यः।

नार्थं मतांतरप्रतिशेषार्थं वा । यदाह—साधर्म्यवैधर्म्ययोरन्यतरेणार्थगतावुभयप्रतिपादनं पक्षादिवचनं वा निग्रहस्थानमिति न तद्युक्तं साधनसामर्थ्येन विपक्षव्यावृत्तिलक्षणेन पक्षं प्रसाधयतः केवलं वचनाधिक्योपलंभछलेन पराजयाधिकरणप्राप्तिः स्वयं निराकृतपक्षेण प्रतिपक्षिणा लक्षणीयेति प्रतिज्ञानुयोगिशास्त्रादिष्वपि नाभिधीयेत विशेषाभावात् । यत्सत्तत्सर्वं क्षणिकं यथा घटः संश्च शब्दः इति त्रिलक्षणं हेतुमभिधाय यदि समर्थयते कथमिव संधामतिशेते तावतार्थप्रतिपत्तौ समर्थनं वा निगमनादिकं यतः पराजयो न भवेत् । सत्त्वमात्रेण नश्वरत्वसिद्धौ–उत्पत्तिमत्त्वकृतकत्वादिवचनं अतिरिक्तविशेषणोपादानात् कृतकत्वप्रयत्नानंतरीयकत्वादिषु च कप्रत्ययातिरेकादसाधनांगवचनं पराजयाय प्रभवेत् । क्वचित्पक्षधर्मप्रदर्शनं संश्चशब्दः इत्यविगानात् त्रिलक्षणवचनसमर्थनं च, असाधनांगवचनं अपजयप्राप्तिरिति व्याहतं । तथान्यस्यापि प्रस्तुतेतरस्य वादिनोक्तावितरस्य स्वपक्षमसाधयतो विजयासंभवात् निग्रहस्थानमयुक्तं । साधनांगस्यावचनं, प्रतिवादिनाप्यदोषस्योद्भावनं दोषस्यानुद्भवनं वा–अनेन प्रत्युक्तं । विजिगीषुणोभयं कर्तव्यं स्वपरपक्षसाधनदूषणं । अतोऽन्यतरेणासिद्धानैकांतिकवचनेऽपि जल्पापरिसमाप्तिः ॥ ७ ॥

निराकृतावस्थापितविपक्षस्वपक्षयोरेव जयेतरव्यवस्था नान्यथेति दर्शयन्नुभयमाह–

**कुशलाकुशलं कर्म परलोकश्च न क्वचित् ।**
**एकांतग्रहरक्तेषु नाथ स्वपरवैरिषु ॥ ८ ॥**

**वृत्तिः**–कुशलं सुखनिमित्तं, अकुशलं दुःखहेतुकं, कर्म मिथ्यात्वासंयमकषाययोगकारणसंचितपुद्गलप्रचयः । कुशलं चाकुशलं च कुशलाकुशलं कर्म शुभाशुभमित्यर्थः । परलोको भवांतरगतिरन्यजन्म । चशब्दोऽनुक्तसमुच्चयार्थः । तेन तत्फलबंधमोक्षेहलोकादयो गृह्यन्ते । नशब्दः प्रतिषेधार्थः । क्वचित् केषुचित् । एक एवांतो धर्मः एकांतः तस्य ग्रहणमभ्युपगमो ग्रहः एकांतग्रहः तस्मिन् तेन वा रक्ता रंजिताः, प्रविष्टा भक्ता एकांतग्रहरक्ताः । अथवा ग्रह इव ग्रहः तेन व्याकुलिताः तेषु एकांतग्रहरक्तेषु । नाथ ! स्वामिन् ! श्रद्धावचनमेतत् । स्वश्चात्मा च परे चान्ये च स्वपरे तेषां वैरिणः शत्रवः तेषु स्वपरवैरिषु । किमुक्तं भवति?—हे नाथ ! अर्हन् ! एकांतग्रहरक्तेषु स्वपरवैरिषु केषु चिदपि शुभाशुभकर्म नास्ति । परलोकादयश्च न सन्ति । एकांततत्त्वग्रहणात् । यद्यपि पक्षान्तर्भूतो हेतुस्तथापि पृथग्द्रष्टव्यः । अंतर्व्याप्तिसंग्रहात् । न केवलमेकान्तवादे कुशलाकुशलादिकं कर्म न घटते किं तु प्रमाणप्रमेयपक्षविपक्षहेतुहेत्वाभासदूषणाभासादिकमपि सर्वथार्थक्रियायोगात् ॥ ८ ॥

सामान्येनैकांतवाद्यभ्युपगतस्य वाच्यं प्रदर्श्येदानीं दूषयितुमनाः स्वल्पोऽपि शत्रुर्नोपेक्षणीय इति न्यायमनुसरन्प्रथमतरं तावद्भावैकांतं भस्मसात्कर्तुमाह–

**अष्टशती**–कर्मफलसंबंधपरलोकादिकं-एकांतवादिनां प्रायेणेष्टं तदनेकांतप्रतिषेधेन बाध्यते ततोऽनुष्ठानमभिमतव्याघातकृत्, सदसन्नित्यानित्याद्येकांतेषु कस्यचित् कुतश्चित् कदाचित् क्वचित्प्रादुर्भावासंभवात् । न हि सर्वात्मना सर्वस्य भूतावेव जन्मविरुद्धं–अपि तु सर्वथाऽभावेऽपि, व्यलीकप्रतिभासानामनुपरमप्रसंगात् । न केवलं स्वभावनैरात्म्य एवायं दोषः किं त्वंतरुभयत्र वा निरन्वयसत्त्वेऽपि न, कार्यकालमप्राप्नुवतः कारणत्वानुपपत्तेश्चिरतरातीतवत् । सत्यभवतः स्वयमेव नियमेन पश्चाद्भवतस्तत्कार्यत्वं विरुद्धं कालांतरेऽपि किं न स्यात् तदभावाविशेषात् समनंतरवत् । समर्थे सत्यभवतः पुनः कालांतरभाविनस्तत्प्रभावाभ्युपगमे कथमक्षणिकेऽर्थक्रियानुपपत्तिः ! तत्सत्त्वासत्त्वयोरविशेषात् । कारणसामर्थ्यापेक्षिणः कालनियमकल्पनायां-अचलपक्षेऽपि समानः परिहारः । क्षणवर्तिन एकस्मात्कारणस्वभावमभेदयतां विचित्रकर्मणामुत्पत्तौ कूटस्थेपि किं न स्यात् कार्योत्पत्तिः । कथमत्रोत्पत्तिर्नाम ? तत्र समानः पर्यनुयोगः, सदसतोरनुत्पत्तेः, निष्पन्नखपुष्पवत् । सतः

१ नित्यपक्षेऽपि ॥

पुनर्गुणांतराधानमनेकं क्रमशोऽप्यनुभवतः किं विरुद्धयेत क्षणस्थायिनः कस्य चिदेव ग्राह्यग्राहकाकार-वैश्वरूप्यानभ्युपगमेऽपि संविदितज्ञानस्य ग्राह्यग्राहकाकारविवेकं परोक्षं बिभ्राणस्य सामर्थ्यप्राप्तेः-अन्यथा शून्यसंविदोर्विप्रतिषेधात् । तदयं क्षणस्थायिकारणं स्वसत्तायां कार्यं कुर्वदभ्युपगच्छन् क्रमोत्पत्तिमुपरुणद्धि, सकलजगदेकक्षणवृत्तिप्रसंगात् । कारणस्य कार्यकालप्राप्तौ क्षणभंगभंगानुषंगात् । तदप्राप्नुवतस्तत्कृतौ व्यलीककल्पनाविशेषेण कूटस्थानतिशायनात् । ततः सुभाषितं कुशलाद्यसंभूतिरेकांतग्रहरक्तेष्विति ॥ ८ ॥

**भावैकांते पदार्थानामभावानामपह्नवात् ।**
**सर्वात्मकमनाद्यंतमस्वरूपमतावकम् ॥ ९ ॥**

**वृत्तिः**—भाव एवेति सन्नेवेति एकांतः असहायधर्मग्रहो भावैकांतः । सर्वथा सत्याभ्युपगम इत्यर्थः । तस्मिन्भावैकान्ते पदार्थानां । पंचविंशतितत्त्वानां चेतनाचेतनदेवमनुजपशुनारकस्तम्भकुम्भाम्भःप्रभृतीनां वा अभावानां वस्तुधर्माणां हेत्वङ्गानां विशेषणमित्यर्थः, बहुवचनाच्चत्वारोऽपि परिगृह्यन्ते अपह्नवान्निराकरणादित्यर्थः । किं स्यात् ? सर्वं निरवशेषमात्मा स्वरूपं यस्य तत्सर्वात्मकं विश्वमेकस्वरूपमित्यर्थः । आदिरुत्पत्तिःपूर्वस्मिन्नसत्त्वं । अंतोऽवसानं विनाशो वा आदिश्चान्तश्चाद्यंतौ तौ न विद्येते यस्य तदनाद्यन्तमनाद्यनन्तमित्यर्थः । स्वमात्मीयरूपमाकारः स्व आत्मैव वा रूपं स्वरूपं न विद्यते तद्यस्य तदस्वरूपं । अभाव इत्यर्थः । तवेदं तावकं न तावकमतावकं । किमुक्तं भवति—पदार्थानां भावैकांताभ्युपगमे अतावकं सर्वाद्यात्मकमनाद्यनंतमस्वरूपं स्यात् कस्मात्सर्वाभावापह्नवात् ॥ ९ ॥

अथ मतं केऽभावाः, कियंतो वा, कान्यनाद्यनंतानि ? कस्मादभावात् किं स्यादत आहः—

**अष्टशती**—निष्पर्यायद्रव्यैकांतपक्षे सर्वात्मकत्वादिदोषानुषंगः कुतः पुनर्विशेषानपह्नुवीत तत्साधनव्यभिचारात् । संविन्निर्भासभेदाद्भावस्वभावभेदः प्रकल्प्यते, स पुनरभेदेऽप्यात्मनः खंडशः प्रतिभासमानात्, तदन्यत्रापि विभ्रमाभावे कोशपानं विधेयं । तदेकं चक्षुरादिज्ञानप्रतिभासभेदवशाद् रूपादिव्यपदेशभाक् ग्राह्यग्राहकसंवित्तिवत् । इतरेतराभावविकल्पोऽपि कथमयतार्थो न स्यात् वर्णादिविकल्पवत् । न हि वस्तुव्यतिरिक्तमसन्नाम प्रमाणस्यार्थविषयत्वात् । अभावदृष्टौ हि तदवसानकारणभावाद्भावदर्शनमनवसरं प्राप्नोति । सकलशक्तिविरहलक्षणनिरुपाख्यस्य स्वभावकार्यादेरभावात् । कुतस्तत्प्रमितिः ? वस्तुनानात्वं बुद्ध्यादिकार्यनानात्वात् प्रतीयते । स्वभावाभेदेऽपि विविधकर्मता दृष्टा युगपदेकार्थोपनिबद्धदृष्टिविषयक्षणवत् । शक्तिनानात्वे प्रसवविशेषात् स चेद्व्यभिचारी ? कुतस्तद्गतिः ? । केवलमविद्यास्वभावदेशकालावस्थाभेदेनात्मनि परत्र चासतः स्वयमसता मिथ्याव्यवहारपदवीमुपनयति-यतः क्षणभंगिनो भिन्नसंततयः स्कंधा विकल्प्येरन् । अन्यथा चेति प्रतिभासकार्याद्यभेदेऽपि कस्य चिदेकत्वं प्रसाधयतीति साध्यसाधनयोरभेदे किं केन कृतं स्यात् ? पक्षविपक्षादेरभावात् । न क्वचिदसाधना साध्यसिद्धिरितिप्रसंगात् ॥ ९ ॥

**कार्यद्रव्यमनादि स्यात्प्रागभावस्य निह्नवे ।**
**प्रध्वंसस्य च धर्मस्य प्रच्यवेऽनंततां व्रजेत् ॥ १० ॥**

**वृत्तिः**—कार्यं च द्रव्यं च कार्यद्रव्यं वस्त्वन्यथाभावः, घटादिकं । क्रियत इति कार्यम् । अवस्थान्तरं द्रवति गच्छतीति द्रव्यम् । अनाद्यनंतसर्वकालैकस्वरूपं नित्यमादिरहितं स्याद्भवेत् । प्राक् पूर्वस्मिन्नभावः असत्त्वं प्रागभावः । मृत्पिण्डे घटस्यासत्त्वमित्यर्थः । तस्य प्रागभावस्य निह्नवे विलोपे निराकरणे । प्रध्वंसस्य च विनाशस्य च घटस्य कपालनाशादय इत्यर्थः । धर्मस्य-विशेषस्य गुणस्य प्रच्यवे अभावे निराकरणे । अनंतस्य भावोऽनंतता तामनंततामपर्यवसानं सर्वकालकार्यमिति संबंधनीयम् । व्रजेत् गच्छेत् । किमुक्तं भवति-प्रागभावस्य निह्नवो यदि स्यात्कार्यद्रव्यमनादि स्यात् । प्रध्वंसाभावस्याभावस्य चाभावे तदेव कार्यद्रव्यमनंततां व्रजेत् ॥ १० ॥

तृतीयचतुर्थभावस्वरूपं तदभावे च यद्भवति—

अष्टशती–प्रागभावानभ्युपगमे घटादेरनादित्वप्रसंगात् पुरुषव्यापारानर्थक्यं स्यात् । कल्पयित्वापि तदभिव्यक्तिं तस्याः प्रागभावोऽगीकर्तव्यः । तथाहि सतः शब्दस्य ताल्वादिभिरभिव्यक्तिः प्रागसती क्रियते न पुनः शब्द एवेति स्वरुचिविरचितदर्शनप्रदर्शनमात्रं । सा यदि श्रवणज्ञानोत्पत्तिः सैव कथं प्राक् सती यत्नतः कर्तव्या। योग्यतायां समानश्चर्चः। तदावरणविगमः प्राक् किमभूत् भूतौ वा किं यत्नेन ? विशेषाधानमपि तादृगेव कर्तृकर्मकरणानां प्रागभावाभावात्, न कश्चिद्विशेषहेतुः, ताल्वादयो व्यंजका न पुनश्चक्रादयोऽपि इति । न हि व्यंजकव्यापृतिर्नियमेन व्यंजकं संनिधापयति । नायं दोषः सर्वगतत्वाद्वर्णानामित्यपि वार्तं ? अन्यत्रापि तथाभावानुषंगात् । इष्टत्वात् अदोषोऽयं न कारणव्यापारेष्वपि चोद्यानिवृत्तेः । एतेनानवस्था प्रत्युक्ता तद्विशेषैकांते तद्वतोऽनुयोगस्तावतेति कर्तव्यतास्थानात् । अभेदैकांते पूर्ववत्प्रसंगः। परिणामेऽप्येषः पर्यनुयोगस्तदभिन्नानां क्रमशोवृत्तिर्माभूत् । भिन्नानां व्यपदेशोऽपि माभूत् संबंधासिद्धेरनुपकारकत्वात् । उपकारेऽपि सर्वं समानं अनवस्था च । विनाशानभ्युपगमे तस्य किंकृतमश्रावणं ? तदात्मानमखंडयतः कस्यचिदावरणत्वायोगात् । आवृतानावृतस्वभावयोरभेदानुपपत्तेः । तयोरभेदे वा शब्दस्य श्रुतिरश्रुतिर्वा इत्येकांतः ? तमसापि घटादेरखंडने पूर्ववदुपलब्धिः किं न भवितुमर्हति ? स्वसंवित्युत्पत्तौ कारणांतरापेक्षा माभूत् तत्करणसमर्थस्य, अन्यथा तदसामर्थ्यमखंडयदकिंचित्करं किं सहकारिकारणं स्यात् । तत्खंडने वा स्वभावहानिरव्यतिरेकात् । व्यतिरेके व्यपदेशानुपपत्तिरिति पूर्ववत्सर्वं । वर्णानां व्यापित्वान्नित्यत्वाच्च क्रमश्रुतिरनुपपन्नैव, समानकरणानां तादृशामभिव्यक्तिनियमायोगात् । सर्वत्र सर्वदा सर्वेषां संकुला श्रुतिः स्यात् । वक्तृश्रोतृविज्ञानयोस्तत्कारणकार्ययोः क्रमवृत्तित्वमपेक्ष्य परिणामिनां क्रमोत्पत्तिप्रतिपत्त्योर्न किंचिद्विरुद्धं पश्यामः । सर्वगतानामेप क्रमो दुष्करः स्यात् क्षणिकेष्वेव करणांगहारादिषु प्रत्यभिज्ञानाद्विरुद्धो हेतुः । तत्क्रियैकत्वेऽपि किमिदानीमनेकं स्यात् । सर्ववर्णैकत्वप्रसंगात् । शक्यं हि वक्तुं–अभिव्यंजकभेदाद्वैश्वरूप्यं जलचंद्रवत् । क्वचित्प्रत्यक्षविरोधे ? तदन्यत्राप्यविरोधः कुतः ? तदयं ताल्वादिव्यापारोपजनितश्रावणस्वभावं परित्यज्य विपरीतमासादयन्नपि नित्यश्चेत्न किंचिदनित्यं । युगपत्प्रतिनियतैकदेशमंद्रतारश्रुतेः कस्य चिदेकत्वेन क्वचिदनेकत्वसिद्धेः । न हि कथंचित् क्वचित्प्रत्यवमर्शो न स्यात्, तच्छब्दविशेषबुद्धेरभिव्यंजकहेतुत्वप्रक्लृतौ सर्वं समंजसं प्रेक्षामहे । तदेतेषां पुद्गलानां करणसंनिपातोपनीतश्रावणस्वभावः शब्दः पूर्वापरकोट्योरसन् प्रयत्नानंतरीयको घटादिवत् पुद्गलस्वभावत्वे दर्शनविस्तारविक्षेपप्रतीघातकर्णपूरणैकश्रोत्रप्रदेशाद्युपलंभो गंधपरमाणुप्रतिविधानतयोपेक्षामर्हति । कर्णशष्कुल्यां कटकटायमानस्य प्रायशः प्रतिघातहेतोर्भवनाद्युपघातिनः शब्दस्य प्रसिद्धिः-अस्पर्शत्वकल्पनामस्तं गमयति । निश्छिद्रनिरगमनादयः सूक्ष्मस्वभावत्वात् स्नेहादिस्पर्शादिवन्न विरुध्येरन् अतो यत्नजनितवर्णाद्यात्मा श्रावणमध्यस्वभावः प्राक् पश्चादपि पुद्गलानां नास्तीति तावानेव ध्वनिपरिणामः । ततः प्राक्प्रध्वंसाभावप्रतिक्षेपे कौटस्थ्यं क्रमयौगपद्याभ्यां स्वाकारज्ञानाद्यर्थक्रियां व्यावर्तयतीति निरूपाख्यत्वमित्यभिप्रायः । तदानुपूर्वीकल्पनां विस्तरेण प्रतिक्षेप्स्यामः ॥ १० ॥

**सर्वात्मकं तदेकं स्यादन्योपाहव्यतिक्रमे ।**
**अन्यत्र समवायेन व्यपदिश्येत सर्वथा ॥ ११ ॥**

वृत्तिः–सर्वो विश्वो निरवशेषः आत्मा स्वरूपं यस्य तत् सर्वात्मकम् । तत् किंचिद्वस्तु विवक्षितरूपं, एकं-अभेदरूपं–स्यात् भवेत् । अन्यस्य अपरस्य अपोहो–निराकरणं तस्य व्यतिक्रमः–निह्नवः निराकृतिः स तथाभूतः तस्मिन्नन्यापोहव्यतिक्रमे इतरेतराभावाभावे इत्यर्थः । अन्यत्र अत्यन्ताभावाभावे । समवायेन मीलनेन समुदायेन । व्यपदिश्येत कथ्येत अभ्युपगम्येत । सर्वथा सर्वप्रकारैः । खरीविषाणादि । अथानयोरभावयोः को विशेषः ? इति चेत्–घटे पटाभाव इतरेतराभावः । कदाचित्कालांतरे तत्तेन स्वरूपेण भवति, शक्तिरूपेण विद्यमानत्वात् । अत्यंताभावः पुनर्जीवत्वेन पुद्गलस्याभावः कदाचिदपि तेन स्वरूपेण न भवति ।

२

एतदुक्तं भवति–अन्यापोहव्यतिक्रमे सति, किंचिद्विवक्षितं सर्वात्मकमेकं भवति। अत्यंताभावाभावे पुनरैक्येन सर्वप्रकारैर्व्यपदिश्येत। ततो न किंचित्स्यात्॥

भावैकांतपक्षे कुशलाकुशलकर्मादिरघटनां प्रदर्श्य अभावैकांतपक्षेऽपि भृशं न घटत इति प्रदर्शयन्नाह–

**अष्टशती**–स्वभावांतरात्स्वभावव्यावृत्तिरन्यापोहः। संविदो ग्राह्यकारात्कथं चिद्व्यावृत्तौ अनेकांतसिद्धिः-अन्यथा संबंधासिद्धिः। अव्यावृत्तावन्यतरस्वभावहानेनेन किंचित्स्यात् विषयाकारविकलस्यानुपलब्धेः। संवित्तेः स्वलक्षणप्रत्यक्षवृत्तावपि संवेद्याकारविवेकःस्वभावांतरानुपलब्धेः स्वभावव्यावृत्तिः। शबलविषयनिर्भासेऽपि लोहितादीनां परस्परव्यावृत्तिरन्यथा चित्रप्रतिभासासंभवात्, तदन्यतमवत्तदालंबनस्यापि नीलादेरभेदस्वभावापत्तेः। तद्वतस्तेभ्योऽव्यावृत्तिरेकानेकस्वभावत्वात् रूपादिवत् अन्यथा द्रव्यमेव स्यान्न रूपादयः। स्वाभाविकत्वेऽपि निर्भासवैलक्षण्यं करणसामिग्रीभेदमनुविदध्यात् दूरासन्नैकार्थोपनिबद्धनानादर्शननिर्भासवत्। प्रतिपुरुषं विषयस्वभावभेदो वा सामिग्रीसंबंधभेदात्। अन्यथा न केवलं रूपादेरभेदः। कस्य चित्क्रमशः संबंध्यंतरोपनिपातोऽपि स्वभावं न भेदयेत्। ततः क्रमवंत्यपि कार्याणि तत्स्वभावभेदं नानुमापयेयुः। ततो यावंति संबंध्यंतराणि तावंतः प्रत्येकं भावस्वभावभेदाः परस्परव्यावृत्ताः। न हि कस्यचित्केनचित् साक्षात्परंपरया वा संबंधो नास्ति निरुपाख्यत्वप्रसंगात्। तदेवं प्रतिक्षणमनंतपर्यायाः प्रत्येकमर्थसार्थाः। क्रमशोऽपि विच्छेदे; अर्थक्रियानुपपत्तेः। स्वभावमसंतन्वतः क्वचिदुपकारितानुपपत्तेः। कारणस्य स्वकार्यात्मना भवतः प्रतिक्षेपायोगात्। स्वभावांतरानपेक्षणात्। तस्मादयमुत्पित्सुरेव नश्यति। नश्वर एव तिष्ठति। स्थास्नुरेवोत्पद्यते। ततः प्रतिक्षणं त्रिलक्षणं–स्थितिरेवोत्पद्यते। विनाश एव तिष्ठति। उत्पत्तिरेव नश्यति। स्थितिरेव स्थास्यत्युत्पत्स्यते विनश्यति। विनाश एव स्थास्यति उत्पत्स्यते विनश्यति। उत्पत्तिरेव उत्पत्स्यते विनश्यति स्थास्यतीति न कुतश्चिदुपरम इति भावः। द्रवति द्रोष्यति अदुद्रवत् सत्त्वेव विशिष्यते द्रव्य-क्षेत्र-काल-भावात्मना। ततः परस्परव्यावृत्तस्वभावाननंतगुणपर्यायान् प्रतिक्षणमासादयंती सत्त्वेव तिष्ठतीत्यादि योज्यं। तथा भेदानेव संद्रवंतीत्यादि प्रतिपत्तव्यं। अत्यंताभावापह्नुतौ न क्वचित्किंचित् कथंचित् वर्तेते तथा सर्वं सर्वत्र सर्वदोपलभ्येत। कथं पुनरभावप्रतिपत्तिः? कथंचन स्यात्। प्रत्यक्षस्य रूपादिस्वलक्षणविषयत्वात् प्रमाणांतरस्यापि स्वकारणविषयत्वादंशतोऽनुपलब्धेः। पर्युदासवृत्त्या वस्तुनि नियमादेकस्य कैवल्यं इतरस्य वैकल्यमिति ब्रुवन्नपि देवानांप्रियो नावधारयति भावाभावप्रतिपत्तेरभावाभ्युपगमात्। स्वपररूपादिभावाभावलक्षणत्वात् सर्वस्य निःश्रेणीपदबंधाभ्यामिव भावाभावस्वभावाभ्यां प्रतिबंधान्न किंचित्प्रमाणं सर्वात्मना भावमभावं वा गृहीतुमर्हति अनियमप्रसंगात्। भावप्रमेयैकांतवादिनामभावप्रतिपत्तिरयुक्तिः अतो न भावप्रतिपत्तिः तत्प्रमेयतोपसंख्यानं प्रमाणद्वयनियमं विघटयति। भावनैरात्म्यस्य प्रमाणाकारणत्वात् प्रतिबंधनियमेऽपि माभूत्॥११॥

**अभावैकांतपक्षेऽपि भावापह्नववादिनां।**
**बोधवाक्यं प्रमाणं न केन साधनदूषणम्॥ १२ ॥**

**वृत्तिः**–अभाव इति असन्निति[2] एकांतो मिथ्याभिप्रायोऽभावैकांतः। स एव पक्षोऽभ्युपगमस्तस्मिन्नप्यभावैकांतपक्षेऽपि। न केवलं भावैकांते, किं त्वभावैकांतेऽपि भावस्य सत्त्वस्य अपह्नवः अभावो निराकरणं तं वदितुं शीलं येषां ते तथाभूतास्तेषां भावापह्नववादिनाम्। बोधो ज्ञानं स्वार्थानुमानं, वाक्यं आगमः परार्थानुमानम्। बोधश्च वाक्यं च बोधवाक्यम्। प्रमीयतेऽनेनेति प्रमाणं स्वपरावभासकं ज्ञानं। न प्रतिषेधवचनम्। केन कतरेण। साधनं च दूषणं च साधनदूषणं द्वंद्वैकवद्भावः। स्वपक्षसिद्धिः परपक्षनिराकरणं। भावापह्नववादिनामभावैकांते बोधवाक्ययोरप्यभावस्ततः प्रमाणाभावात् केन साधनं केन वा दूषणं क्रियत इति संबंधः॥ १२॥

---

१ कुतश्चिदुपरसते पाठोऽयं लिखित पुस्तके। २ असदिति पाठो लिखितपुस्तके।

भावाभावैकांते विरोधं निरूप्योभयैकांतवादिनामपि न किंचित्संगच्छत इत्याह—

**अष्टशती**—बहिरंतश्च परमार्थसत् अन्यतरापायेऽपि साधनदूषणप्रयोगानुपपत्तेरिति प्रकृतार्थपरिसमाप्तौ किं त्रिलक्षणविकल्पनया। न हि संवृत्त्या साध्यसाधनव्यवस्था युक्तिमती। शून्यसिद्धेरपरमार्थत्वे पुनरनिराकृतसद्भावस्य सर्वस्याशून्यतानुषंगात्। समारोपव्यवच्छेदेऽपि समानं। हेयोपादेयोपायरहितमयमहीकः केवलं विक्रोशति। संवृत्त्यास्तीति स्वरूपेणेत्ययमर्थः? कृतमनुकूलं। केवलं वक्ता आत्मनो वैयात्यं सूचयति। अथ पररूपेण नास्ति नाम्नि विवादात् एतदपि तादृगेव। तदेतेनोभयानुभयविकल्पः प्रत्युक्तः। तदस्ति मृषात्मनेति समानश्चर्चः। संवृत्तिर्विचारानुपपत्तिरित्ययुक्तं। तदभावात्तत्प्रतिपादनार्थं शास्त्रमुपदिशन्नुपदेष्टारं चावर्णयन् सर्वं प्रतिक्षिपतीति कथमनुन्मत्तः? शौद्धोदनेरेव तावत्प्रज्ञापराधोऽयं लोकातिक्रांतः कथं बभूवेत्यतिविस्मयमास्महे। तमन्ये पुनरद्यापि कीर्तयंतीति किं वत परमन्यत्र मोहनीयप्रकृतेः॥ १२॥

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां।**
**अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ १३ ॥**

**वृत्तिः**—विरोधाद्व्यभिचारात् पूर्वापरासंगतत्वात्। न प्रतिबंधवचनम्। एक आत्मा स्वभावो ययोस्तौ तथा तयोर्भावस्तदैकात्म्यम्। उभयोः सत्त्वासत्त्वयोरैकात्म्यमुभयैकात्म्यं भावाभावैक्यमित्यर्थः। न्यायो युक्तिः प्रमाणेन प्रमेयस्य घटना। स्याद्वाद एव न्यायः स्याद्वादन्यायस्तस्मै विद्विष्टं वा विद्विषन्तीति स्याद्वादन्यायविद्विषस्तेषां स्याद्वादन्यायविद्विषामनेकांतवैरिणाम्। अथ भावाभावोभयकांतपक्षदोषदर्शनादवाच्यतैकांत आश्रीयते? तथापि दोष एव अत आह। उच्यत इति वाच्यं न वाच्यमवाच्यं तस्य भावोऽवाच्यता सैव एकांतोऽविद्याध्यवसायोऽवाच्यतैकांतस्तस्मिन्नवाच्यतैकांते अपि। शब्दार्थयोरवाच्यवाचकत्वेऽपि। उक्तिर्वचनं अवाच्यमित्यवक्तव्यमिति। न युज्यते न घटते। स्याद्वादन्यायविद्विषां वादिनामुभयैकात्म्यं न भवति। विरोधात्। विज्ञानशून्यवत्। तथावक्तव्यैकांतपक्षेऽपि अवाच्यमित्येवं या उक्तिः साऽपि न युज्यते। सर्वथाऽवाच्यत्वात्। एकशब्देन घटपटादिवत्॥ १३॥

एकहेलया यदि सर्वथा सदसदुभयावक्तव्यरूपं तत्त्वं नास्ति कथं तर्हीत्याह—

**अष्टशती**—भावाभावयोरेकतरप्रतिक्षेपैकांतपक्षोपक्षिप्तदोषपरिजिहीर्षया सदसदात्मकं सर्वमभ्युगच्छतोऽपि वाणी विप्रतिषिध्यते। तस्याः परस्परपरिहारस्थितिलक्षणत्वात्। न हि सर्वात्मना कंचिदर्थं संतं तथैवासंतमाचक्षाणः स्वस्थः स्वाभ्युपगमेतरनिरासविधानकरणात् शून्यावबोधवत्। त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात्—अपेतमप्यस्ति विनाशप्रतिषेधादिति वा तदन्यथापेतमन्यथास्तीति स्याद्वादावलंबनमंधसर्पविलप्रवेशन्यायमनुसरति। योऽपि पक्षत्रयोपक्षिप्तदोषपरिजिहासया सर्वथाऽवक्तव्यतत्त्वमवलंबते सोऽपि कथमवक्तव्यं ब्रूयात्? नैष दोषः स्वलक्षणमनिर्देश्यं प्रत्येकं कल्पनापोढमित्यादिवत्। तदप्यसत् यदसतः समुदाहृतं। यथैवाक्षविषयेऽभिधानं नास्ति तथाक्षज्ञाने विषयो नैवास्ति ततस्तत्र प्रतिभासमानेपि न प्रतिभासते। न केवलं विषयबलात् दृष्टेरुत्पत्तिः—अपि तु चक्षुरादिशक्तेश्च। तदर्थवत् करणमनुकर्तुमर्हतिन वार्थं विशेषाभावात्। दर्शनस्य कारणांतरसद्भावेऽपि विषयानुकारानुकारित्वमेव, सुतस्येव पित्राकारानुकरणमित्यपि वार्तं स्वोपादानमात्रानुकरणत्वप्रसंगात्। उभयाकारानुकरणेऽपि रूपादिवदुपादानस्यापि विषयतापत्तेरतिशयाभावात्। वर्णादेर्वा तद्वदविषयत्वप्रसंगात्। तज्जन्मरूपाविशेषेऽपि तदध्यवसायनियमात् बहिरर्थविषयत्वमित्यसारं। दर्शनस्यानध्यवसायात्मकत्वाददोषोऽयं प्रत्यक्षस्याध्यवसायहेतुत्वा'दित्यनिरूपिताभिधानं तत्राभिलापाभावात्। तदभावेऽप्यध्यवसायकल्पनायां प्रत्यक्षं किं नाध्यवस्येत्। यथैव हि प्रत्यक्षस्याभिलापसंसर्गयोग्यता नास्ति तथा तत्समनंतरभाविनोऽपि विकल्पस्य। तथाहि किंचित्केन चिद्विशिष्टं गृह्यमाणं विशेषणविशेष्यतत्संबंधव्यवस्थाग्रहणमपेक्षते दंडिवत्। नचायमियतो व्यापारान् कर्तुं समर्थः? प्रत्यक्षबलोत्पत्तेरविचारकत्वात्—प्रत्यक्षवत्। नैतदेवं शब्दार्थविकल्पवासनाप्रभवत्वान्मनोविकल्पस्य ततस्तर्हि

कथमक्षबुद्धेरूपादिविषयत्वानियमः ? तदभ्युगमे वा तदभिलापसंसर्गोऽपि तद्वदनुमीयते । तस्मादयं किंचित्पश्यन् तत्सदृशं पूर्वदृष्टं न स्मर्तुमर्हति तन्नामविशेषास्मरणात् । तदस्मरन्नैव तदभिधानं प्रतिपद्यते । तदप्रतिपत्तौ तेन तत्र योजयति । तदयोजयन्नाध्यवस्यतीति न क्वचिद्विकल्पः शब्दो वेत्यविकल्पाभिधानं जगत् स्यात् । तथाहि—बहिरंतर्वा गृहीतमप्यगृहीतकल्पं क्षणक्षयलक्षणसंवेदनादिवत् तथाचायातमचेतनत्वं जगत । सहस्मृतिरयुक्तैव. तन्नामाक्षरमात्राणामपि क्रमशोऽध्यवसानात् अन्यथा संकुला प्रतिपत्तिः स्यात् । नाम्नो नामांतरेण विनापि स्मृतौ केवलार्थव्यवसायः किं न स्यात् । तन्नामांतरपरिकल्पनायामनवस्था । तदयमशब्दं सामान्यं व्यवस्यन् स्वलक्षणमपि व्यवस्येत् । भेदाभावात् सामान्यवत् । स्वलक्षणमध्यवस्यन्नभिलापेन योजयेत् ततो न किंचित्प्रमेयमनभिलाप्यं नाम । प्रत्यक्षस्यानभिलाप्यत्वे स्मार्ते शब्दानुयोजनं दृष्टसामान्यव्यवसायो यद्यपेक्षेत सोऽर्थो व्यवहितो भवेत् तदिंद्रियज्ञानात्सामान्यव्यवसायो न स्यात् प्रागिवाजनकत्वात् तदंतरेणापि दर्शनमयं गौरिति निर्णयः स्यात् । अनभिलाप्यस्य विशेषस्यानुभवे कथमभिलाप्यस्य स्मृतिरत्यंतभेदात् ? । शब्दार्थयोः संबंधस्यास्वाभाविकत्वे कथमर्थमात्रं पश्यन् शब्दमनुस्मरेत् ? । तदर्थं वा यतोऽयं व्यवसायः । चक्षुरादिज्ञानस्य कथंचिद् व्यवसायात्मकत्वाभावे दृष्टसजातीयस्मृतिर्न स्यात् । दानहिंसाविरतिचेतसः स्वर्गादिफलजननसामर्थ्यसंवेदनवत् । क्षणक्षयानुभववद्वा प्रत्यक्षेऽभिलापसंस्कारविच्छेदे कुतस्तद्विकल्पाभिलापसंयोजनं यतः सामान्यमभिलाप्यं स्यात् । नच ग्राहकप्रत्यक्षस्मृतिप्रतिभासभेदाद्विषयस्वभावभेदः सकृदेकार्थोपनिबद्धदर्शनप्रत्यासन्नेतरपुरुषज्ञानविषयवत् । तथा च मंदप्रतिभासिनि तत्संकेतव्यवहारनियमकल्पनायामपि कथंचिदभिधेयत्वं वस्तुनः सिद्धमित्यलं प्रसंगेन । तस्मादवाच्यैकांते यदवाच्यमित्यभिधानं तदसमंजसं स्वलक्षणमनिर्देश्यमित्यादिवत् स्ववचनविरोधात् ॥ १३ ॥

कथंचित्ते सदेवेष्टं कथञ्चिदसदेव तत् ।<br>तथोभयमवाच्यं च नययोगान्न सर्वथा ॥ १४ ॥

वृत्तिः—कथंचित्-केन चित्प्रकारेण । ते-तव सदेव-भाव एव । इष्टं-मतमभ्युपेतम् । कथंचित्-केनचित्प्रकारेण । असदेव-अभाव एव । तत् यदेव सत् । तथा तेनैव केनचित्प्रकारेण । उभयं सदसदात्मकम् । अवाच्यमवक्तव्यम् । चकारात्कथंचिदित्यर्थः । नयस्य वक्तुरभिप्रायस्य योगो युक्तिर्नययोगस्तस्मान्नययोगादभिप्रायवशादित्यर्थः । न सर्वथा-सर्वकारैर्न । किमुक्तं भवति—सदसदुभयावक्तव्यं वस्तु न भवति । किंतु केन चित्प्रकारेण ।

तदेव स्पष्टयति अनवस्थां च निराकरोति उत्तरकारिकया—

**अष्टशती**—नावग्रहादेरन्योन्यं स्वलक्षणविवेकैकांतो जीवांतरवत् स्वात्मन्यपि संतानभेदप्रसंगात् । अहमहमिकयात्मा वितताननुभवन्ननादिनिधनः स्वलक्षणप्रत्यक्षः सर्वलोकानां क्वचिच्चित्रविज्ञिक्षणे नीलादिविशेषनिर्भासवत् आत्मभूतान् परस्परतो विविक्तान् सहक्रमभाविनो गुणपर्यायानात्मसात्कुर्वन् सन्नेव । तदेकत्वाभावे नीलादिविशेषनियतदर्शननानासंतानसंवेदनक्षणवच्चित्रसंवेदनं न स्यात् । तथा क्रमवृत्तीनां सुखादीनां मतिश्रुतादीनां वा तादात्म्यविगमैकांते संततिरनेकपुरुषवत् । नैरंतर्यादेरविशेषात्संतानव्यतिकरोऽपि किं न स्यात् । न हि नियामकः कश्चिद्विशेषोऽन्यत्र भेदाभेदपरिणामात् असंकरे हर्षविषादादिचित्रप्रतिपत्तेरयोगात् । यथैकत्र समनंतरात्ग्रहादिसदादिस्वभावसंकरपरिणामस्तथैव सर्वत्र चेतनाचेतनेषु संप्रत्यतीतानागतेषु, तत्स्वभावाविच्छित्तेः । अतः कथंचित्सदेवेष्टं । न केवलं जीवाजीवप्रभेदाः सजातीयविजातीयव्यावृत्तिलक्षणाः किंतु बुद्धिक्षणेपि क्वचिद्ग्राह्यग्राहकयोः सितादिनिर्भासांशपरमाणुसंवित्तयोऽपि, परस्परपरिहारस्थितिलक्षणत्वात् अन्यथा स्थूलशबलालोकनाभावात्, तदेकांशवत् । तथाच सकलचेतनेतरक्षणपरिणामलवविशेषाः परस्परविविक्तात्मनस्तदन्योन्याभावमात्रं जगत् अन्यथा सर्वथैकत्वप्रसंगात् । अन्वयस्य विशेषापेक्षणादभावो वा । तदिष्टं सदेव कथंचित् । न हि भावाभावैकांतयोर्निःपर्यायमंगीकरणं युक्तं । यथैवास्ति तथैव नास्तीति विप्रतिषे-

धात् कथंचित्सदसदात्मकं द्रव्यपर्यायनयापेक्षया, विपर्यये तथैवासंभवात् । सर्वथा जात्यंतरकल्पनायां तदंशनिबंधनविशेषप्रतिपत्तेरत्यंताभावप्रसंगात् । सर्वथोभयरूपत्वे वा जात्यंतरप्रतिपत्तेरयोगात् । तथा चानवस्थादिदोषानुषंगः । तदिष्टं स्यादुभयं, सद्भावेतराभ्यामनभिलापे वस्तुनः केवलं मूकत्वं जगतः स्यात् विधिप्रतिषेधव्यवहारायोगात् । न हि सर्वात्मनामभिलाप्यस्वभावं बुद्धिरध्यवस्यति । न चानध्यवसायं प्रमितं नाम गृहीतस्यापि तादृशस्यागृहीतकल्पत्वात् मूर्छाचैतन्यवत् । सर्वात्मनाभिधेयत्वेऽपि प्रत्यक्षेतराविशेषप्रसंगात् । तथाभिधेयत्वेऽपि सत्येतरयोरभेदः स्यात् । स्वपक्षविपक्षस्यासत्वात् तत्त्वप्रदर्शनाय यत्किंचित्प्रणयन् वस्तु सर्वथानभिधेयं प्रतिजानातीति किमप्येतन्महाद्भुतं, तत्कृतां वस्तुसिद्धिमुपजीवति न च तद्वाच्यतां चेति स्वदृष्टिरागमात्रमनवस्थानुषंगात् ॥ १४ ॥

सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् ।
असदेव विपर्यासान्न चेन्न व्यवतिष्ठते ॥ १५ ॥

वृत्तिः—सदेव-सत्त्वमेव सर्वं-निरवशेषं विश्वम् । को नेच्छेत्-को न मन्यते कस्य नेष्टं ? किंतु इष्टमेव सर्वस्य । स्वरूपमात्मरूपं स्वस्य वा रूपं तदादिर्यस्य तत्स्वरूपादि तच्चैतच्चतुष्टयं चतुर्विकल्पं तत्तथाभूतं । तस्मात्स्वरूपादिचतुष्टयात् । किं तत् ? स्वद्रव्यस्वक्षेत्रस्वकालस्वभावः । तस्मात् । असदेव नास्तित्वमेव विपर्यासात्-अस्वरूपादिचतुष्टयात् । अस्वद्रव्यक्षेत्रकालभावात् । न चेत्-यद्येवं न । न व्यवतिष्ठते-न घटते नात्मस्वरूपं लभत इत्यर्थः । किमुक्तं भवति-स्वरूपादिचतुष्टयात्सर्वं सदेव को नेच्छेत् ? । विपर्ययाद्विपर्ययं को नेच्छेत् ? । यदि पुनर्येनैव सत्त्वं तेनैवासत्त्वमिति स्यान्न किंचिदपि स्यात् ।

शेषभंगप्ररूपणार्थमाह—

अष्टशती-स्यात्सदसदात्मकाः पदार्थाः सर्वस्य सर्वाकरणात् । नहि पटादयो घटादिवत् क्षीराद्याहारणलक्षणामर्थक्रियां कुर्वंति घटादिज्ञानं वा । तदुभयात्मनि दृष्टांतः सुलभः । शब्देतरप्रत्यययोः एकानेकवस्तुविषययोः, एकात्मसमवेतयोः कारणविशेषवशात् परिवृत्तात्मनोः स्वभावभेदेऽपि कथंचिदेकत्वमस्त्येव विच्छेदानुपलब्धेः । उपादानस्य कार्यकालमात्मानं कथंचिदनयतश्चिरतरनिवृत्ताविशेषात् कार्योत्पत्तावपि व्यपदेशानुपपत्तेस्तादृशं स्वरूपैकत्वमस्त्येव विशेषापेक्षया तु नास्त्येव । न हि पौरस्त्यः पाश्चात्यः स्वभावः, पाश्चात्यो वा पौरस्त्यः निरपेक्षः । तत्र क्रमोऽपि प्रतिभासातिशयवशात् प्रकल्प्येत तदेकत्वादक्रमः किं न स्यात् । तदेकमनेकाकारं, अक्रमक्रमात्मकं, अन्वयव्यतिरेकरूपं सामान्यविशेषात्मकं सदसत्परिणामं स्थित्युत्पत्तिविनाशात्मकं स्वप्रदेशनियतं स्वशरीरव्यापिनं त्रिकालगोचरमात्मानं परं वा कथंचित् साक्षात्करोति परोक्षयति वा केशादिविवेकव्यामुग्धबुद्धिवत् । तादृशैकचैतन्यं सुखादिभेदं वस्तु स्वतोऽन्यतः सजातीयविजातीयाद्विविक्तलक्षणं बिभर्ति–अन्यथा अनवस्थानात् क्वचित्कथंचिदनियमः स्यात् ॥ १५ ॥

क्रमार्पितद्वयाद् द्वैतं सहावाच्यमशक्तितः ।
अवक्तव्योत्तराः शेषास्त्रयो भंगा स्वहेतुतः ॥ १६ ॥

वृत्ति—क्रमेण परिपाट्या अर्पितं विवक्षितं क्रमार्पितं तच्च तद्द्वयं द्वितयं क्रमार्पितद्वयं तस्मात्क्रमार्पितद्वयात् । द्वाभ्यामितं द्वीतं-द्वीतमेव द्वैतं-द्वयात्मकमस्तित्वनास्तित्वस्वरूपं-क्रमविवक्षितस्वपरचतुष्टयादस्तित्वनास्तित्वस्वरूपमित्यर्थः । सह-युगपत् एकहेलया विवक्षितस्वपरचतुष्टयादित्यर्थः । यद्यपि द्वयशब्दः समासांतर्भूतस्तथापि तेन संबंधोऽन्यस्याऽश्रुतत्वात् । अवाच्यं–अवक्तव्यमुच्चारयितुमशक्यमित्यर्थः । कुतः ? अशक्तितः असामर्थ्यात् । अवक्तव्यमवाच्यमुत्तरं-परं येषां भङ्गानां तेऽवक्तव्योत्तराः शेषा अन्ये त्रयो भङ्गास्त्रयो विकल्पाः । स्वहेतुतः स्वकीयकारणात् । के ते स्वहेतवः स्वरूपादिचतुष्टयात्सहविवक्षितस्वरूपादिचतुष्टयाच्चास्ति चावक्तव्यं । तथा पररूपादिचतुष्टयात्, युगपद्दर्शितस्वपररूपादिचतुष्टयाच्च नास्ति चावाच्यम् । तथा क्रमार्पितस्वरूपादिचतुष्टयाद्युगपद्विवक्षितस्वपररूपादिचतुष्टयाच्चास्ति नास्ति चावक्तव्यं च ।

किमुक्तं भवति ?— स्वहेतोः स्यादस्ति १ । स्यान्नास्ति २ । स्यादस्ति नास्ति च ३ । स्यादवक्तव्यम् ४ । स्यादस्ति चावक्तव्यम् ५ । स्यान्नास्ति चावक्तव्यम् ६ । स्यादस्ति नास्ति चावक्तव्यं च ७ वस्तुत इत्यर्थः ॥

अस्तित्वादीन् धर्मान् युक्तितः समर्थ्य, अधुना तेषामेकस्मिन्नधिकरणेऽवस्थानस्य विरोधमन्तरेण परस्परपरिहारेण रूपादीनामिव युक्तितः समर्थनार्थमाह—

**अष्टशती**-स्वपररूपाद्यपेक्षं सदसदात्मकं वस्तु न विपर्यासेन तथा दर्शनात्, कल्पयित्वापि तज्जन्मरूपाध्यवसायान् स्वानुपलंभव्यावृत्तिलक्षणं दर्शनं प्रमाणयितव्यं । तथाहि—बुद्धिरियं यथा प्रत्यासत्त्या कस्य चिदेवाकारमनुकरोति तया तमेव नियमेनोपलभेत नान्यथा पारंपर्यपरिश्रमं परिहरेत् । त्रिलक्षणस्यापि विभ्रमहेतुफलविज्ञानैर्व्यभिचारात् तदनभ्युपगमे स्वाभ्युपगमासिद्धेः किंसाधनः परमुपालभेत ? । तदेकोपलंभनियमः स्वपरलक्षणाभ्यां भावाभावात्मनं प्रसाधयति, तदभावे न प्रवर्तयति नापि निवर्तयति प्रमाणांतरवत्तिष्पर्यायं भावाभावाभिधानं नांजसैव विषयीकरोति शब्दशक्तिस्वाभाव्यात् । वचनसूचनसामर्थ्यविशेषानतिलघनात् । संकेतानुविधानेऽपि कर्तृकर्मणोः शक्त्यशक्तयोरन्यतरव्यपदेशार्हत्वात् । अयोदारुवज्रोल्लेखनवत् । अन्यथा चाक्षुषात्वादयः शब्दादिधर्मा न भवेयुः । अतो यावंति पररूपाणि तावंत्येव प्रत्यात्मं स्वभावांतराणि तथा परिणामात् । द्रव्यपर्यायौ व्यस्तसमस्तौ समाश्रित्य चरमभंगत्रयव्यवस्थानं । न खलु सर्वात्मना सामान्यं वाच्यं ? तत्प्रतिपत्तेरर्थक्रियां प्रत्यनुपयोगात् । न हि गोत्वं वाहदोहादावुपयुज्यते । लक्षितलक्षणया वृत्तिः कथंचित्तादात्म्येन भवेत्, संबंधांतरासिद्धेः कार्मुकादिवत् । तादृशानुपलंभात्संकेतोऽपि न सिद्ध्येत् । सतापि तादृशान्यव्यावृत्यात्मना भवितव्यं अन्यथा विशेषवत्स्वभावहानिप्रसंगात् विशेषाणां वा तद्वत्तो व्यावृत्तेर्नचान्यापोहः सर्वथार्थः शब्दस्य विकल्पस्य वा । साधनवचनेन नित्यत्वसमारोपव्यवच्छेदेऽपि , स्वलक्षणस्यानित्यत्वसिद्धौ साधनवचनानर्थक्यात् । विकल्पाभिधानयोर्वस्तुसंस्पर्शाभावे स्वलक्षणदर्शनस्याकृतनिर्णयस्य वस्तुसन्निधेरविशेषात् किं केन प्रमितं स्यात् । न हि मिथ्याध्यवसायेन तत्त्वव्यवस्थानं वस्तुदर्शनसमारोपव्यवच्छेदयोः अन्यतरस्यापि स्वतस्तत्त्वापरिनिष्ठितौ इतरेतराश्रयदोषः । समयादर्शिनोऽपि क्वचिदन्वयबुद्ध्यभिधानव्यवहारो तत्कार्यकारणव्यतिरेकव्यवस्थायां गुडुच्याद्युदाहरणप्रक्लृप्तिं विपर्यासयति—॥ १६ ॥

**अस्तित्वं प्रतिषेध्येनाविनाभाव्येकधर्मिणि ।**
**विशेषणत्वात्साधर्म्यं यथा भेदविवक्षया ॥ १७ ॥**

**वृत्तिः**-अस्तित्वं सत्त्वं प्रतिषेध्येन—नास्तित्वेन अविनाभावि—नास्तित्वेन विना न भवति पृथग्भूतं नोपलभ्यत इत्यर्थः । धर्मा अस्य सन्ति धर्मी एकश्चासौ धर्मी च तस्मिन्नेकधर्मिणि । विशेषणत्वात् । उपाधिवशात्[१] । समानो धर्मः सधर्मस्तस्य भावः साधर्म्यमन्वयः । यथा—दृष्टांतप्रदर्शकः । भेदस्य विवक्षाऽर्पणा तया इत्यर्थः । एकधर्मिणि शब्दादौ अस्तित्वं नास्तित्वाविनाभावि कुतः ? विशेषणत्वात् । यथा कृतकत्वादौ साधर्म्यं वैधर्म्येण विना न भवति । यद्विशेषणं तत्प्रतिषेध्याविनाभावि यथा साधर्म्यं व्यतिरेकविवक्षया । द्रुमादौ विशेषणं चास्तित्वं । तस्मात्प्रतिषेध्यधर्माविनाभावि ॥ १७ ॥

तथा—

**अष्टशती**— सर्वमित्थमनित्थं चेति प्रतिज्ञाय-अभिप्रेत्य वा प्रमेयत्वादिहेतूपादनेऽपि व्यतिरेको ऽस्त्येव प्रमेयत्वस्य वस्तुधर्मत्वात् । खपुष्पादयोऽपि तत्र व्यवहारमिच्छता प्रमेयाः प्रतिपत्तव्या इति न किंचित्प्रमाणं प्रमेयाभावस्यापि तथाभावानुषंगेणाव्यवस्थाप्रसंगात् । नचैतद्विरुद्धं स्वलक्षणमनिर्देश्यमित्यादिवत् ।

१ लिखितपुस्तके उपाधिरवाद्विति पाठः ।

दर्शने स्वाकारमनपर्यतां स्वभावकार्यप्रतिबंधाभावे प्रमेयत्वं प्रमाणांतरमवश्यमाकर्षयति । ततोविप्रतिषिद्ध-मेतत् । नच स्वलक्षणमेवान्यापोहः सर्वथाविधिनियमयोरेकतानत्वाऽसंभवात् । तत्स्वभावभेदाभावे च संकेतविशेषानुपपत्तेः-अभिधानप्रत्ययविशेषोऽपि माभूत्तदन्यतरवत् । ततो यावंति पररूपाणि प्रत्येकं तावंतस्ततततः परावृत्तिलक्षणाः स्वभावभेदाः प्रतिक्षणं प्रत्येतव्याः । यदि संबंध्यंतराणि भावस्वभावभेदकानि न स्युस्तदा नित्यत्वेऽपि कस्यचित्संबंध्यंतरेषु कदाचित्केषु क्रमशोऽर्थक्रिया न वै विप्रतिषिध्येत । शक्यं हि वक्तुं क्रमवर्तीनि कारणानि तत्तन्निर्वर्तनात्मकानि इति नित्यं स्वभावं न वै जहाति क्षणिकसामिग्रीसन्निपातैकतमवत् । तदेतत्तदा तदा तत्तत्कर्तुं समर्थमेकं स्वभावं अविचलितं बिभ्राणं सहकारिकारणानि स्वभावस्याभेदकानि नानाकार्यनिबंधनानि कादाचित्कानि प्रतीक्ष्यंत इति । तदिमेऽर्थो विधिप्रतिषेधाभ्यां संप्रतिवृत्तानप्रतिबंधमतिवर्तते वस्तुत एव । ततो न संवृत्तिस्तद्व्यवहाराय भेदमावृत्त्य तिष्ठतीति युक्तं । तदनेकस्वभावाभावे विनिर्भासासंभवात् आत्मनि परत्र चासंभविनमाकारमादर्शयतीति मुग्धायते सर्वत्रासहायरूपानुपलब्धेः । तदियं संवृतिः सामान्यसामानाधिकरण्य-विशेषणविशेष्यभावादिव्यवहारानिर्भासान् बिभ्रती स्वयमनेकरूपतां प्रतिक्षिपंतं व्यवस्थापयति । तद्वद्भावांतराणामनेकात्मकत्वे वास्तवी साधर्म्यादिस्थितिरविशेषेण विकल्पबुद्धेर्मिथ्यात्वं प्रतिजानंतं प्रतिक्षिपत्येव । यत्पुनरेतदन्यतो व्यावृत्तिरनात्मिकैवेति तन्न चक्षुरादिज्ञानस्य निर्व्यवसायात्मकस्य स्वयमभूताविशेषात् । निर्णयस्य भावस्वभावाऽसंस्पर्शिनः सर्वथा वस्तुतत्त्वापरिच्छेदादच्छमेवेति स्वयमेकांतानुपपत्तेः । अतोऽयं स्वभावः स्वभावभेदान् विधिप्रतिषेधविषयान् बिभ्राणः प्रत्यक्षेतरप्रमाणसमाधिगतलक्षणः प्रतीयेत । तस्माद्यद्विशेषणं तत्प्रतिषेध्याविनाभावि क्वचिद्धर्मिणि यथा साधर्म्यं भेदविवक्षया, कृतकत्वादौ विशेषणं चास्तित्वं ततः प्रतिषेध्यधर्मप्रतिबंधी ॥ १७ ॥

नास्तित्वं प्रतिषेध्येनाविनाभाव्येकधर्मिणि ।
विशेषणत्वाद्वैधर्म्यं यथाऽभेदविवक्षया ॥ १८ ॥

**वृत्तिः**–नास्तित्वं प्रतिषेध्येनास्तित्वेनाविनाभावि विशेषणत्वात् । यथा वैधर्म्यमभेदविवक्षया ॥ यत्किंचित् विशेषणं तत्सर्वमेव प्रतिपक्षधर्माविनाभावि यथा वैधर्म्यं साधर्म्यविवक्षयां । हेतोर्विशेषणं च नास्तित्वं ॥ १८ ॥

पुनरप्यविरोधं दर्शयन्नाह–

**अष्टशती**–भेदाभेदविवक्षयोरवस्तुनिबंधनत्वे विपर्यासोऽपि किं न स्यात् । ततः समंजसमेतत् । यत्किंचिद्विशेषणं तत् सर्वमेकत्र प्रतिपक्षधर्माविनाभावि यथा वैधर्म्यमभेदविवक्षया हेतौ । तथा च नास्तित्वं विशेषणं–अन्यथा व्यवहारसंकरप्रसंगात् । न हि स्वेच्छाप्रक्लृप्तधर्मधर्मिव्यवस्थायां परमार्थावतारः स्यात् । तदसमीक्षिततत्त्वार्थैर्लोकप्रतीतिवशाद्भेदाभेदव्यवस्थितिस्तत्त्वप्रतिपत्तये समाश्रियत इति बालाभिलापकल्पं । भावस्वभावोपरोधात् ॥ १८ ॥

विधेयप्रतिषेध्यात्मा विशेष्यः शब्दगोचरः ।
साध्यधर्मो यथा हेतुरहेतुश्चाप्यपेक्षया ॥ १९ ॥

**वृत्तिः**–विधेयशब्दवाच्यः साध्य इत्यर्थः । प्रतिषेध्यो निराकरणीयः । द्वन्द्वः । तावात्मा स्वरूपं यस्य स विधेयप्रतिषेध्याध्यात्मा विशेष्यो धर्मी पक्ष इत्येकार्थः । शब्दगोचरः शब्दविषयः । साध्यस्य धर्मः साध्यधर्मः । यथा दृष्टान्तप्रदर्शकः । हेतुः साधनमहेतुरसाधनम् । अपिः सम्भावनायाम् । अपेक्षया विवक्षया ॥ विशेष्यो विधेयप्रतिषेध्यात्मा शब्दगोचरत्वात् यथा साध्यधर्मो हेतुश्चाहेतुश्च भवति विवक्षया । अग्निमत्त्वे साध्ये धूमो हेतुर्भवति जलत्वे साध्येऽहेतुरेकस्मिन्धर्मिणि । एवमत्रापि–यो यः शब्दविषयः स सर्वोऽपि विधेयप्रतिषेध्यात्मा विशेष्यः । यथा साध्यधर्मो हेतुरहेतुश्चापेक्षया । शब्दविषयश्च विशेष्यः तस्माद्विधेयप्रतिषेध्यात्मा ॥ १९ ॥

शेषभंगान् समर्थयन्नाह—

**अष्टशती**—किंचित्केन चिद्विशिष्टं गृह्यमाणं विशेषणविशेष्यतत्संबंधलोकस्थितिसंकलनेन गृह्येत नान्यथेत्यभिनिवेशेऽपि वस्तुनो विधिप्रतिषेधस्वभावयोः प्रत्येकं दर्शनमवश्यंभावि। ततो विधिप्रतिषेधावात्मानौ विशेषस्य सविकल्पकत्वं प्रसाधयतः। ततः सामान्यविशेषात्मकत्वं वस्तुत्वलक्षणं। अस्तित्वनास्तित्वयोर्धर्मी सामान्यं तत्र तादात्म्यलक्षणः संबंधः संबंधांतरकल्पनायामनवस्थाप्रसंगात्। तन्नैतत्सारं, जात्यादिमतामेतन्न संभवत्येवेति तदभाव एवासंभवात् तथा सति नैकांतेन दर्शनविकल्पाभिधानानां विषयभेदोऽस्ति कथंचित्प्रतिभासभेदेऽपि प्रत्यासन्नेतरपुरुषदर्शनवत्। तथाहि धूमादयः कृतकत्वादयो वा क्वचिदग्निसलिलयोर्विनाशेतरयोर्वा साधनेतरस्वभावाभ्यां साक्षात्क्रियेरन्। इतरथा हि विशेष्यप्रतिपत्तेरयोगात्। अनापेक्षायां तु विरोधः। तस्मात् यदभिधेयं तद्विशेष्यं यद्वा विशेष्यं तदभिलाप्यं यद्वा वस्तु तत्सर्वं विधेयप्रतिषेध्यात्मकं यथोत्पत्त्यादिः। अपेक्षया हेतुः—अहेतुश्च साध्येतरयोः—तथा च विमत्यधिकरणं सत्त्वाभिधेयत्वादि॥१९॥

**शेषभंगाश्च नेतव्या यथोक्तनययोगतः।**
**न च कश्चिद्विरोधोऽस्ति मुनींद्र तव शासने॥ २०॥**

**वृत्तिः**—शेषभंगाश्च अवक्तव्यादयो नेतव्या ज्ञातव्या योजनीयाः। यथोक्तश्चासौ नयश्च यथोक्तनयः तस्य योगस्तस्मात् विशेषणत्वादिति हेतोरित्यर्थः। विरोधोऽपि न कश्चित्। उपलक्षणमेतत्। विरोध इति संशयविरोधवैयधिकरण्योभयदोषप्रसंगसंकरानवस्थाऽभावान्नाक्षिपति एते दोषा न संति। कस्मात्? अनेकांतत्वाद्वस्तुनः। जीवादिपदार्थयाथात्म्यमननान्मुनयस्तेषामिंद्रो भगवान् केवली तस्य संबोधनं हे मुनींद्र। तव शासने युष्मन्मते। अनभिलाप्यादयोऽपि धर्माः क्वचिदेकधर्मिणि प्रत्यनीकस्वाभावाविनाभाविनो विशेषणत्वात् पूर्वोक्तमुदाहरणम्॥

**अष्टशती**—स्यादस्ति स्यान्नास्तीति भंगद्वयमुपयुक्तं तदपेक्षयाशेषत्वं। भंगत्रयापेक्षं वा। यथोक्तनययोगत इति विशेषणत्वादीनाक्षिपति। तदनभिलाप्यादयोऽपि क्वचिद्धर्मिणि प्रत्यनीकस्वभावाविनाभाविनः प्रतीयंते विशेषणत्वादिभ्यः पूर्वोक्तमुदाहरणं। नचैवं सति किंचिद्विप्रतिषिद्धं—अन्यथैव विरोधात्॥ २०॥

अनेकांतात्मकं तत्त्वं व्यवस्थाप्यैकांतं निराकर्तुमाह—

**एवं विधिनिषेधाभ्यामनवस्थितमर्थकृत्।**
**नेति चेन्न यथाकार्यं बहिरंतरुपाधिभिः॥ २१॥**

**वृत्तिः**—एवमनेन प्रकारेण। विधिनिषेधाभ्यामस्तित्वनास्तित्वाभ्याम्। अनवस्थितमनवधारितं यद्वस्तु तदर्थं कृत्-कार्यकारि भवति। नेति चेत् यद्येवं न भवति। न। यथाकार्यं यथाभूतं कार्यमुपलभ्यते तस्य कारकं न स्यात्। बहिरंतरुपाधिभिः बाह्याभ्यंतरहेतुभिः सहितैरपि। अथवा अनवस्थितं शून्यं अयथाकार्यम्॥

अथ मतं स्यादस्तीत्यनेनैव स्याच्छब्देन सर्वे भंगा गृहीताः। किमेतेषां प्रपंचोऽत आह—

**अष्टशती**—सप्तभंगीविधौ स्याद्वादे विधिप्रतिषेधाभ्यां समारूढं वस्तु सदसदात्मकमर्थक्रियाकारि कथंचित्सत एव सामिग्रीसन्निपातिनः स्वभावातिशयोपपत्तेः सुवर्णस्य केयूरादिसंस्थानं नेति चेदित्यादिनैकांतेऽर्थक्रियां प्रतिक्षिपति। न तावत्सतः पुनरुत्पत्तिरस्ति। न चानुत्पन्नस्य स्थितिविपत्ती खपुष्पवत्। नाप्यसतः सर्वथोत्पत्त्यादयस्तद्वत्। यदि पुनः सामिग्र्याः प्राग्विद्यमानस्य जन्म न स्यात् को दोषः स्यात्। तस्या निरन्वयविनाशे निष्कारणस्य तथैवोत्पत्तिर्न स्यात्। न हि निराधारोत्पत्तिर्विपत्तिर्वा क्रियारूपत्वात्। स्थितिवन्नैतन्मंतव्यं। नोत्पत्त्यादिः क्रिया क्षणिकस्य तदसंभवात्। ततोऽसिद्धो हेतुरिति प्रत्यक्षाविरोधात्। प्रादुर्भावादिमतः चक्षुरादिबुद्धौ प्रतिभासनात्। अन्यथा तद्विशिष्टविकल्पोऽपि माभूत् न हि दंडपुरुषसंबं-

धादर्शने दंडीति विकल्पः स्यात् । तस्मात्सूक्तं यदेकांतेन सदसद्वा तन्नोत्पत्तुमर्हति व्योमवंध्यासुतवत् । इति । कथमिदानीमनुत्पन्नस्य गगनादेः स्थितिः? इति चेत् न—अनभ्युपगमात् । द्रव्यनयापेक्षया, परप्रसिद्ध्या वा उदाहरणं ॥ २१ ॥

**धर्मे धर्मेऽन्य एवार्थो धर्मिणोऽनंतधर्मणः ।**
**अंगित्वेऽन्यतमांतस्य शेषांतानां तदंगता ॥ २२ ॥**

**वृत्तिः**—धर्मे धर्मे धर्मनिर्देशे । भङ्गे भङ्गे इति वा पाठांतरं । अन्य एवार्थोऽपूर्व एवार्थः । कुतः? धर्मिणो वस्तुनः । अनंता धर्माः स्वभावा यस्य सोऽनंतधर्मा तस्यानंतधर्मणः । अंगित्वे प्रधानत्वे । अन्यतमांतस्यास्तित्वादीनां मध्ये एकतमस्य । शेषांतानां परिशेषधर्माणां नास्तित्वादीनां । ततस्मात् । अंगता अप्रधानता । अथवा तदांगता इति पाठांतरम् । तदा तस्मिन्काले । शेषाणामप्रधानता । अतः पुनरुक्तता नास्ति । अथवा सुनयसप्तभंगीनिरूपणार्थमियं कारिका, संक्षेपार्था चेयं ॥ २२

सप्तभंगीं योजयन्नाह—

**अष्टशती**—यदि पुनः प्रत्युपाधि परमार्थतः स्वभावभेदो न स्यात् तदा दृष्टेऽभिहिते वा प्रमाणांतरमुक्त्यंतरं वा निरर्थकं स्यात् । गृहीतग्रहणात्पुनरुक्तेश्च स्वभावातिशयाभावात्, सदुत्पत्तिकृतकत्वादेः प्रत्यनीकस्वभावविशेषाभावात् । यावंति पररूपाणि तावंत्यस्ततस्ततो व्यावृत्तयः प्रत्येकमित्येषापि कल्पना माभूत् । सतां हि स्वभावानां गुणप्रधानभावः स्यात् । ततः परिकल्पितव्यावृत्त्या धर्मांतरव्यवस्थानं परिफल्गुप्रायं वस्तुस्वभावाभावप्रसंगात् । तथेंद्रियबुद्धयोऽपि स्वलक्षणविषया माभूवन्, केवलं व्यावृत्तिं पश्येयुः, अदृष्टे विकल्पायोगात्[1] । अतिप्रसंगाच्च ॥ २२ ॥

**एकानेकविकल्पादावुत्तरत्राऽपि योजयेत् ।**
**प्रक्रियां भंगिनीमेनां नयैर्नयविशारदः ॥ २३ ॥**

**वृत्तिः**—नयविशारदो नयः प्रमाणपरिगृहीतार्थैकदेशे वस्त्वध्यवसायस्तस्मिन्कुशलः । नयैः स्वहेतुभिर्विशेषणत्वादिभिः । एनां प्रक्रियाम् । भंगिनीं भंगवतीं भंगबहुलां । उत्तरत्रापि इह ऊर्ध्वमपि । योजयेदुद्घाटयेत् ॥ क । एकश्च अनेकश्च तावेव विकल्पौ तावादिर्यस्य तस्मिन्नेकानेकविकल्पादौ । कथं? स्यादेकः । स्यादनेकः । स्यादेकश्चानेकश्च । स्यादवक्तव्यः । स्यादेकश्चावक्तव्यः । स्यादनेकश्चावक्तव्यश्च । स्यादेकश्चानेकश्चावक्तव्यश्च । एवमनेन द्वैताद्वैतादिषु योज्यं ॥ २३ ॥

सदाद्येकांतेषु दोषमुद्भाव्यैवमद्वैतैकांतं दूषयितुमाह—

**अष्टशती**—स्यादेकं सद्द्रव्यनयापेक्षया । यद्यपि विशेषाः परस्परव्यावृत्तपरिणामाः कालादिभेदेऽपि सद्रूपाविशिष्टाश्चित्रज्ञाननीलादिनिर्भासवत् स्यादनेकत्वमास्कंदंति । न हि संख्यासंख्यावतोर्भेदेनादृष्टौ विशेषेणविशेष्यविकल्पः कुंडलिवत् । क्षीरोदकवदतद्वेदिनि-नच भेदैकांते तद्वृत्तास्ति व्यपदेशनिमित्ताभावात् । अनवस्थाप्रसंगाच्च । तस्मादयं कथंचिदत्र संख्यासंख्यावतोः स्वभावभेदं पश्यति[2] तद्विशिष्टविकल्पनात् । क्वचिन्निर्णयेऽप्यन्यत्र संशयाद्, वर्णरसादिवत् ॥ २३ ॥

**इत्याप्तमीमांसाभाष्ये प्रथमः परिच्छेदः ।**

---

१ । अदृष्टविकल्पायोगात् पाठोयं ख. पुस्तके । २ पश्यन् पश्यतीति ख. पुस्तके पाठः ।

**अद्वैतैकांतपक्षेऽपि दृष्टो भेदो विरुध्यते ।**
**कारकाणां क्रियायाश्च नैकं स्वस्मात्प्रजायते ॥ २४ ॥**

**वृत्तिः**–अद्वैतमेवेत्येकांतोऽसद्ग्रहः स एव पक्षो जिज्ञासितविशेषो धर्मी तस्मिन्नपि दृष्टो भेदः प्रत्यक्षप्रमाणपरिच्छिन्नं नानात्वं लोकप्रसिद्धं वा । विरुध्यते मिथ्या भवेत् । कारकाणि कर्त्रादीनि क्रिया आकुंचनादिका पाकादिका वा एतेषां परस्परेण "इयं क्रिया इमानि कारकाणि इदं कर्तृकारकमिदं कर्मेत्यादि । इयं दहनक्रिया इयं पचनक्रियेत्यादि । चशब्दादिदं प्रमाणमिदं परिच्छेद्यं वस्तु" इति भेदो न स्यात् । कुतः ? नेति एकांतप्रतिषेधवचनम् । एकमसहायम् स्वस्मादात्मनः । प्रजायत उत्पद्यते ॥ २४ ॥

तथैवमपि—

**अष्टशती**–सदाद्येकांतेषु दोषोद्भावनमभिहितं । अद्वैतैकांताभ्युपगमात् न तावतानेकांतसिद्धिरिति चेत् ? न प्रत्यक्षादिविरोधात् । न हि कस्यचिदभ्युपगममात्रं प्रमाणसिद्धं क्रियाकारकभेदं प्रतिरुणद्धि क्षणिकाभ्युपगमवत् । न स्वतो जायते परतो वा अपि तु सुषुप्तायते प्रतिपत्त्युपायाभावात् । तस्मात् यद्दृष्टविरुद्धं तन्न समंजसं । यथा नैरात्म्यं । विरुद्ध्यते च तथाऽद्वैतं क्रियाकारकभेदप्रत्यक्षादिभिः ॥ २४ ॥

**कर्मद्वैतं फलद्वैतं लोकद्वैतं च नो भवेत् ।**
**विद्याऽविद्याद्वयं न स्यात् बंधमोक्षद्वयं तथा ॥ २५ ॥**

**वृत्तिः**–शुभकर्माशुभकर्मेति द्वयं न स्यात् । पुण्यमिदं पापमिदं इहलोकः परलोको ज्ञानमज्ञानं बंधो मोक्षश्च जीवप्रदेशकर्मप्रदेशान्योन्याश्लेषो बंधः । अष्टविधकर्ममोक्षो मोक्ष इत्येवमादि न स्यात् ॥

प्रमाणादद्वैतं निराकर्तुमाह—

**अष्टशती**–प्रमाणप्रत्यनीकं स्वमनीषिकाभिरद्वैतमन्यद्वा किंचित्फलमुद्दिश्य आरचयेत्[1] । अन्यथा तत्प्रतिपत्तिप्रवर्तनायोगात्प्रेक्षावृत्तेः । तथाहि पुण्यपापसुखदुःखेहपरलोकविद्येतरबंधमोक्षविशेषरहितं प्रेक्षापूर्वकारिभिःअनादरणीयं यथा नैरात्म्यदर्शनं । तथा च प्रस्तुतं[3] ॥ २५ ॥

**हेतोरद्वैतसिद्धिश्चेद्द्वैतं स्याद्धेतुसाध्ययोः ।**
**हेतुना चेद्विना सिद्धिर्द्वैतं वाङ्मात्रतो न किं ॥ २६ ॥**

**वृत्तिः**–अद्वैतस्य सिद्धिः किं हेतोराहोस्विद्वचनमात्रात् ? यदि हेतोरिदं साधनमिदं साध्यमिति द्वैतं स्यात् । साधनमंतरेणाद्वैतस्य सिद्धिश्चेदेवं वचनमात्राद्द्वैतं कस्मान्न स्यादिति समानं ॥ २६ ॥

पुनरप्यद्वैतं निराकर्तुमाह—

**अष्टशती**–यदसिद्धं तन्न हितेप्सुभिःअहितं जिहासुभिर्वा प्रतिपत्तव्यं । यथा शून्यैकांतः । तथाचासिद्धमद्वैतमित्यत्र नासिद्धो हेतुः । तत्सिद्धिर्यदि साधनात् ? साध्यसाधनयोस्तर्हि द्वैतं स्यात् । अन्यथा अद्वैतसिद्धिवत् द्वैतसिद्धिः कथं न स्यात् ? स्वाभिलापमात्रादर्थसिद्धौ सर्वं सर्वस्य सिद्ध्येत् ॥ २६ ॥

**अद्वैतं न विना द्वैतादहेतुरिव हेतुना ।**
**संज्ञिनः प्रतिषेधो न प्रतिषेध्यादृते क्वचित् ॥ २७ ॥**

**वृत्तिः**—द्वैताद्विना न भवत्यद्वैतं । यथा अहेतुर्हेतुमंतरेण न भवति । संज्ञिनो नामवतः प्रतिषेध्यमंतरेण प्रतिषेधो यस्मात् । यो यः संज्ञी तस्य तस्य प्रतिषेध्यमंतरेण प्रतिषेधो न भवति । यथा कुसुममंतरेण आकाशादौ कुसुमस्य । संज्ञि चाद्वैतं तस्माद्द्वैतेन विना प्रतिषेधो न भवति ॥ २७ ॥

---

१ इत्यतोऽग्रे प्रमाणादि न स्यादित्यपि पाठः । २ । आरभयेत् पाठः ख. पुस्तके । ३ । प्रकृतमित्यर्थः ।

अधुना सर्वथा सर्वपदार्थपृथक्त्वैकांतवादिवैशेषिकादिमतकदर्थनार्थमाह—

**अष्टशती**–अद्वैतशब्दः स्वाभिधेयप्रत्यनीकपरमार्थापेक्षः नञ्पूर्वाखंडपदत्वात् अहेत्वभिधानवत्। नात्र किंचिदतिप्रसज्यते तादृशो नञो वस्तुप्रतिषेधनिबंधनत्वात्। सर्वत्र प्रतिषेध्यादृते संज्ञिनः प्रतिषेधाभावः प्रत्येतव्यः ॥ २७ ॥

इष्टमद्वैतैकांतापवारणं पृथक्त्वैकांतांगीकरणात् इति भावदीधरत्।

**पृथक्त्वैकांतपक्षेऽपि पृथक्त्वादपृथक्कृतौ।**

**पृथक्त्वे न पृथक्त्वं स्यादनेकस्थो ह्यसौ गुणः ॥ २८ ॥**

**वृत्तिः**–यद्यप्यद्वैतैकांतपक्षे दोषभयात् पृथक्त्वमित्येकांतपक्षोऽभ्युपगम्यते तथापि पृथग्गुणात्तावपृथग्भूतावभ्युपगन्तव्यौ गुणगुण्यादी। अन्यथा तस्मादपि यदि तौ पृथक् भिन्नौ स्यातां तदानीं पृथक्त्वाख्योगुणो न स्यात्? कुतः। यतोऽनेकस्थो ह्यसौ गुणो दृष्ट इत्यर्थः न च तयोः पृथक्त्वगुणः पृथग्गतिः सर्वेषामभावः स्यात्। तस्मात् भेदपक्षोऽपि न श्रेयान् ॥

इदानीं पृथक्त्वैकांतवादिविशेषमायासु क्षणिकत्वैकांतकदर्थनार्थमाह—

**अष्टशती**–पृथग्भूतपदार्थेभ्यः पृथक्त्वस्य पृथग्भावे तेषामपृथक्त्वप्रसंगात्। तद्गुणगुणिनोरतादात्म्ये घटपटवद् व्यपदेशोऽपि माभूत् संबंधनिबंधांतराभावात्। पृथक्त्वमन्यद्वा पृथग्भूतमनंशं अनेकस्थेषु निष्पर्यायं वर्तते–इति दुरवगाहं ॥ २८ ॥

**संतानः समुदायश्च साधर्म्यं च निरंकुशः।**

**प्रेत्यभावश्च तत्सर्वं न स्यादेकत्वनिह्नवे ॥ २९ ॥**

**वृत्तिः**–एकत्वस्य सादृश्यस्य कथंचित्तादात्म्यस्य। निह्नवोऽपह्नुतिर्निराकरणम्। अथवा एकशब्दो द्रव्यवचनोऽयं ततः स्वार्थिकस्त्वप्रत्ययः तस्मिन्नेकत्वनिह्नवे। क्रमभाविनां कारणतद्गतामालीनकमन्दकमधुरकादीनां गोरसजातिमजहतामुत्तरोत्तरपरिणामप्रवाहः संतानो न स्यान्न भवेत्। तथा रूपरसादीनां धर्माणां सहभुवां नियमतो युगपदुत्पादव्ययभाजामेकस्मिन्नवस्थानं समुदयो न स्यात् यद्यनेकांतात्मकं द्रव्यं न स्यात्। तथा शब्दघटादीनां साधर्म्यं च न स्यात्। मृत्वाऽमुत्र प्राणिनः प्रादुर्भावः प्रेत्यभावः सोऽपि न स्यात्। निरंकुशो निर्बाधोऽस्खलितरूपः सर्वत्र संबंधनीयः। चशब्देन प्रत्यभिज्ञानादयोऽपि न स्युः। तदेतत्सर्वं न स्यादिति समुदायेन निर्देशात् यथायोग्यं संबंधो भवति। सामान्यनिर्देशान्नपुंसकलिंगता।

पुनरपि भेदैकांते दूषणमाह–

**अष्टशती**–कार्यकारणयोः पृथक्त्वैकांते कार्यकालमात्मानमनयतः कारणत्वाऽसंभवात्तदनुपपत्तेः कुतः संततिः? पूर्वापरकालभाविनोरपि हेतुफलव्यपदेशभाजोरतिशयात्मनोरन्वयः संतानः क्वचित्क्षणांतरे नीललोहितादिनिर्भासचित्रैकसंवेदनवत् कथंचिदेकत्वमेव भवितुमर्हति। तदवयवपृथक्त्वकल्पनायां चित्रनिर्भासोऽभावात्। पृथग्वर्णांतरविषयानेकसंतानैकक्षणवत् तत्र प्रत्यासत्तिविशेषः कथंचिदैक्यात् कोऽपरः स्यात्? अन्यथा वेद्यवेदकाकारयोरपि पृथक्त्वैकांतप्रसंगात्। स्वभावभेदेऽपि सहोपलंभनियमात्कथंचिदभेदाभ्युपगमे कथमेकसंतानसंविदां समनंतरोपलंभनियमात्कथंचिदैक्यं न स्यात्। तत्र यथा प्रत्यासत्त्या संतानः समुदायश्च तथैव कथंचिदैक्यमस्तु। न हि तादृशां साधर्म्यमन्यदन्यत्रात्मसांकार्यात्। एकज्ञाननिर्भासविशेषाणां मिथः स्वभावभेदेऽपि यथैकत्वपरिणामः स्वभावतोऽनंकुशः तथा प्रेत्यभावादिषु संतानान्वयः परमार्थैकत्वमात्मसत्त्वजीवादिव्यपदेशभाजनं स्वभावभेदानाक्रम्य स्वामिवदनन्यत्र वर्तयति ॥ २९ ॥

---

१ अभिमतमद्वैतैकांतप्रतिषेधः इत्यर्थः। २ सर्वमित्यत्रेत्यर्थः। ३। मा भूदिति ख. पुस्तके पाठः।

**सदात्मना च भिन्नं चेत् ज्ञानं ज्ञेयाद्द्विधाऽप्यसत् ।**
**ज्ञानाभावे कथं ज्ञेयं बहिरंतश्च ते द्विषां ॥ ३० ॥**

**वृत्तिः**—तथा चैतन्यस्वरूपेण ज्ञेयात्प्रमेयात् ज्ञानमत्रबोधो भिन्नमन्यच्चेद्यदि सदात्मना चास्तित्वरूपेणापि पृथक् स्यात् । द्विधाऽपि ज्ञानं ज्ञेयं चासत्स्यात् । अभावः स्यात् । कुतः? ज्ञानाभावे बोधशून्ये कथं ज्ञेयम् । बहिर्बाह्यं । अन्तः अतरङ्गं च । ते द्विषां तुभ्यं द्विषतां मिथ्यादृशाम् । यस्माज्ज्ञाने सति [1]ज्ञेयं विषयत्वात्, ज्ञेये सति ज्ञानं च भवति तत्परिच्छेदकत्वात् । तस्मात् ज्ञानं कथंचिदभिन्नमेषितव्यं सदाद्यात्मनाऽन्यथाऽवस्तु स्यात् ।

सार्वविशेषस्य वाच्यवाचकतेष्यते तस्य पूर्वमदृष्टत्वात्सामान्यं व्यपदिश्यते शब्दैरित्यभिप्रायवतो मतमाश्रित्य तत्कदर्थयितुमाह—

**अष्टशती**—विषयिणो विषयात्कथंचित्स्वभावभेदेऽपि सदाद्यात्मना तादात्म्यं बोधाकारस्यैव विषयाकारात्, विशेषाभावात् । अन्यथा ज्ञानमवस्त्वेव खपुष्पवत् । तदभावे बहिरंतर्वा ज्ञेयमेव न स्यात् तदपेक्षत्वात् ॥ ३० ॥

**सामान्यार्था गिरोऽन्येषां विशेषो नाभिलप्यते ।**
**सामान्याभावतस्तेषां मृषैव सकला गिरः ॥ ३१ ॥**

**वृत्तिः**—अथ मतं सामान्यमस्माभिरिष्यते किंतु शब्दगोचरत्वादवस्तु, अत आह । सामान्यं विकल्पेनेष्टोऽर्थो वाच्यो यासां ताः सामान्यार्थाः । गिरो वाचः । अन्येषां मिथ्यादृशां । यतस्ताभिर्विशेषो याथात्म्यं स्वलक्षणं नाभिलप्यते । यद्येवं सामान्यं तेषामवस्तु अतस्तस्याभावात्सकलाः समस्ता गिरो वचनानि मृषैवासत्यरूपा एव अतो न वाच्यं नापि वाचकोऽ[2]नुमानाभावः ॥ ३१ ॥
उभयैकांतं निराकर्तुकामः प्राह—

**अष्टशती**-विशेषाणामशक्यसमयत्वात्-असंकेतितानभिधानात् विशेषदर्शनवत्तद्बुद्धावप्रतिभासनात् अर्थसंनिधानानपेक्षणाच्च, स्वलक्षणमनभिधेयं सामान्यमस्तु? उच्यत इति वस्तु नोच्यत इति स्यात् । ततः किं शब्दोच्चारणेन संकेतेन वा? गोशब्दोऽपि हि गां नाभिवक्त यथाश्वशब्दः । तथाच मौनं यत्किंचिद्वा वचनमाचरेत् विशेषाभावात् । अस्ति विशेषः कथं स्वार्थं नाभिदधीत न वै परमार्थैकतानत्वात् अभिधाननियमः किंतूपादानविशेषात्? इत्यपि वार्तं अविकल्पेऽपि तथैव प्रसंगात् । तदेवमनवधारितात्मकं वस्तुस्वलक्षणमापनीपद्येत । नावश्यमिंद्रियज्ञानं-अर्थसंनिधानमपेक्षते विप्लवाभावप्रसंगात् । नापि विशदात्मकमेव दूरेऽपि तथाप्रतिभासप्रसंगात् । यथारात् । क्षणभंगादिसाधनवचनमन्यद्वा न किंचित्सत्यं वक्तुरभिप्रेतमात्र सूचितत्वात् । प्रधानेश्वरादिसाधनवाक्यवत् । सदर्थाप्रतिपादनाद्वा प्रसिद्धालीकवचनवत् । दृश्यविकल्पार्थाकारयोः कथंचिदप्यतादात्म्ये स्वलक्षणं सर्वथानवधारितलक्षणं दानादिचेतोधर्मादिक्षणवत् कथं संशीति मतिवर्तेत । विकल्पानां चावस्तुविषयत्वादविकल्पेतरराश्योरर्थेतरविषयत्वमन्यद्वा स्वांशमात्रावलंबिना विकल्पांतरेण प्रत्येतीति सुपरिबोधप्रज्ञो देवानांप्रियः । स्वत एव विकल्पसंविदां निर्णये स्वलक्षणविषयोऽपि विकल्पः स्यात् । परतश्चेत्? अनवस्थानादप्रतिपत्तिः । अतोऽर्थविकल्पोऽपि माभूत् इत्यनल्पं जगत्स्यात् । नचायं परोक्षबुद्धिवादमतिशेते स्वयमनिर्णीतेन नामात्मना बुद्धिरर्थं व्यवस्थापयतीति सुव्यवस्थितं तत्त्वं । न वै स्वरूपं पररूपं वा बुद्धिरध्यवस्यति निर्विषयत्वादिभ्रांतेः । इदमतो भ्रांततरं बहिरंतश्च सद्भावासिद्धेः । स्वपरस्वभावप्रतिपत्तिशून्येन स्वपरपक्षसाधनदूषणव्यवस्थां प्रत्येतीति किमपि महाद्भुतं ॥ ३१ ॥

---

१ ज्ञेयं भवतीत्यर्थः । २ ताथागतमते स्वलक्षणविषयं प्रत्यक्षं सामान्यविषयं चानुमानं ततश्च सामान्याभावेऽनुमानाभावः स्यादित्यतदर्थः ।

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।
अवाच्यतैकान्तेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ३२ ॥

**वृत्तिः**—अथ मतं यद्येकैके दोष उभयैकात्म्यमेषितव्यमिति दूषणमाह । एकत्वपृथक्त्वपरप्रत्यनीकस्वभावद्वयसम्भवोऽपि न संभवति अस्तित्वनास्तित्ववत् प्रतिषेधात् । एकैनैकस्य निराकृतत्वात् । अथावाच्यमिष्यते तदपि न । अवाच्यत्वे येयमुक्तिः साऽपि न संभवति मिथ्यादृशां ।

सामान्यविशेषौ परस्परानपेक्षावन्याभ्युपगतौ निरस्य तौ सापेक्षौ सन्तावर्थक्रियां कुरुत इत्यस्यार्थस्य प्रतिपादनार्थमाह—

**अष्टशती**—अस्तित्वनास्तित्वैकत्वानेकत्ववत् पृथक्त्वेतरप्रत्यनीकस्वभावद्वयसंभवोऽपि माभूत् विप्रतिषेधात् । न खलु सर्वात्मना विरुद्धधर्माध्यासोस्ति तदन्योन्यविधिप्रतिषेधलक्षणत्वाद्, बंध्यासुतवत् । सर्वथानभिलाप्यतत्त्वाभ्युपगमेऽपि यदेतदनभिलाप्यं तत्त्वमिति तद्व्याहन्येत ॥ ३२ ॥

अनपेक्षे पृथक्त्वैक्ये ह्यवस्तु द्वयहेतुतः ।
तदेवैक्यं पृथक्त्वं च स्वभेदैः साधनं यथा ॥ ३३ ॥

**वृत्तिः**—परस्परानपेक्षे पृथक्त्वैक्ये सामान्यविशेषावस्तु अर्थक्रियाकारि न भवति द्वयहेतोर्द्वाभ्यां । कथं ? यद्विशेषशून्यं तन्नास्ति यथा खरविषाणं सामान्यं च तथा परपरिकल्पितं । तस्मान्नास्ति विशेषः सामान्यशून्यत्वात् । खरविषाणविशेषवत् । इत्यनेन हेतुद्वयेन सामान्यविशेषयोरवस्तुत्वं साधनीयं । तदेव वस्तु ऐक्यं-सामान्यं-विशेषश्च पृथक्त्वं च द्वयात्मकं । कुतः ? अविरोधात् । यथा साधनं हेतुज्ञानं वाक्यं वा स्वभेदैः स्वधर्मैः पक्षधर्मान्वयव्यतिरेकादिभिर्भिन्नमेकं भवति ।

ननु तदेवैक्यं पृथक्त्वं च कथं ? यावता विरुद्धमेतत् ,—

**अष्टशती**—एकत्वपृथक्त्वेऽनेकांततः स्तः प्रत्यक्षादिविरोधात् इति स्पष्टयति—पृथक्त्वैकत्वे तथाभूते न स्तां—एकत्वपृथक्त्वरहितत्वाद् व्योमकुसुमादिवत् । सापेक्षत्वे हि तदेवैक्यं पृथक्त्वमित्यविरुद्धं सपक्षविपक्षयोर्भावाभावाभ्यां साधनवत् । स्वभेदैर्वा संवेदनवत् । सारंभकावयवैर्वा घटादिवत् । तादृशं हि साधनं स्वार्थक्रियायास्तदंतरेणापि पाठांतरमिदं बहुसंगृहीतं भवति ॥ ३३ ॥

सत्सामान्यात्तु सर्वैक्यं पृथक् द्रव्यादिभेदतः ।
भेदाभेदविवक्षायामसाधारणहेतुवत् ॥ ३४ ॥

**वृत्तिः**—सतोऽस्तित्वस्य सामान्यं यस्तथा तस्माच्च सर्वस्यैक्यमेव । द्रव्यादिभेदैर्द्रव्यपर्यायगुणादिभेदैरथवा द्रव्यक्षेत्रकालभावैर्भिन्नं पृथक्त्वादेव । भेदश्चाभेदश्च तयोर्विवक्षायां क्रियमाणायामसाधारणहेतुः श्रावणत्वप्राणादिमत्त्वादिस्तद्वत् । यद्यप्यत्रान्वयो नास्ति तथाप्यन्यथानुपपत्तिबलेन सिद्धमिति ॥ ३४ ॥

केषांचिद्विद्यमानस्याविवक्षाऽविद्यमानस्यैव विवक्षा अन्येषां वैयाकरणानां विद्यमानस्यैव विवक्षा नाविद्यमानस्य, अन्येषां विवक्षा नास्तीत्येतन्मतनिराकरणायाह—

**अष्टशती**—सर्वार्थानां समानपरिणामेऽपि कथमैक्यं भेदानां स्वभावसांकर्यानुपपत्तेः । यथैकभेदस्य स्वभावविच्छेदाभावात् । अन्यथैकं सदन्यदसत्स्यात् ? तत्समंजसं सर्वमेकं सदविशेषात् इति । तस्यैव सतो द्रव्यादिभेदात् पृथक्त्वं । उदाहरणं पूर्ववत् ॥ ३४ ॥

---

१ अभिन्नस्येत्यर्थः ।

विवक्षा चाविवक्षा च विशेष्येऽनंतधर्मिणि ।
सतो विशेषणस्यात्र नासतस्तैस्तदर्थिभिः ॥ ३५ ॥

**वृत्तिः**—सतो विद्यमानस्य विशेषणस्यास्तित्वादेर्विवक्षा चाविवक्षा च । नासतो नाविद्यमानस्य क्रियते । कैस्तदर्थिभिर्विवक्षाप्रयोजनवद्भिः । अत्रैकस्मिन् । कुतः ? लोकप्रसिद्धमेतत् ।

कस्यचिद्भेदः संवृतिकल्पितोऽन्यस्याभेदः संवृतिकल्पित इत्येतां दुरागमवासनाजनितां विप्रतिपत्तिं निराकर्तुमाह—

**अष्टशती**—विधिप्रतिषेधधर्माणां सतामेव विवक्षेतराभ्यां योगस्तदर्थिभिः क्रियेत अन्यथा अर्थनिष्पत्तेरभावात् उपचारमात्रं तु स्यात् । नचाऽग्निर्माणवक इत्युपचारात्पाकादावुपयुज्यते । तदेकैकशः परस्परव्यावृत्तयोऽपि परिणामविशेषाः ॥ ३५ ॥

प्रमाणगोचरौ संतौ भेदाभेदौ न संवृती ।
तावेकत्राविरुद्धौ ते गुणमुख्यविवक्षया ॥ ३६ ॥

**वृत्तिः**—भेदाभेदौ प्रमाणगोचरौ-प्रमाणविषयौ संतौ—भवंतौ संवृतिरूपावपरमार्थौ न प्रमाणविषयत्वात् । अतस्तवागमे तावेकत्रैकस्मिन् धर्मिणि न विरुद्धौ । गुणविवक्षया अप्रधानविवक्षया । मुख्यविवक्षया प्रधानविवक्षया । दृश्यते च लोके प्रधानाप्रधानविवक्षा यथाऽनुदरा कन्येत्यादि ॥ ३६ ॥

नित्यत्वैकांतं निराकर्तुकाम आह—

**अष्टशती**—प्रमाणमविसंवादिज्ञानमनधिगतार्थाधिगमलक्षणत्वात् । तदेवं सति भेदमभेदं वा नान्योऽन्यरहितं विषयीकरोति । न हि बहिरंतर्वा स्वलक्षणं सामान्यलक्षणं वा तथैवोपलभामहे यथैकांतवादिभिराम्नायते । सूक्ष्मस्थूलाकाराणां स्थूलसूक्ष्मस्वभावव्यतिरेकेण प्रत्यक्षादावप्रतिभासनात् तत्र स्वभावांतरस्य प्राधान्यविवक्षायां-आकारांतरस्य गुणभावः स्यात् । घटोऽयं परिमाणवो रूपादयो वेति ॥ ३६ ॥

इति आप्तमीमांसाभाष्ये द्वितीयः परिच्छेदः ।

---

नित्यत्वैकांतपक्षेऽपि विक्रिया नोपपद्यते ।
प्रागेव कारकाभावः क्व प्रमाणं क्व तत्फलम् ॥ ३७ ॥

**वृत्तिः**—उक्तपक्षदोषभयान्नित्यत्वैकांतपक्ष आश्रीयते तत्रापि सतो भावस्यांतरावाप्तिर्विक्रिया सा नोपपद्यते न घटते इत्यर्थः । अत एव कारणात् कारकाणि कर्त्रादीनि तेषामभावः शून्यता । प्रागेव पूर्वमेव । तस्मिन्नभावे कारकविशेषप्रमाणवस्तुयाथात्म्यप्रतिपादकं क तस्मिन् किंतु न कांचिदपि । तदभावे क प्रमाणफलमुपेक्षाहानोपादानादिकम् ? ॥ ३७ ॥

माभूद्विक्रिया व्यंग्यव्यंजकभावो भविष्यतीत आह—

**अष्टशती**-सदसदेकत्वपृथक्त्वैकांतप्रतिषेधानंतरं नित्यत्वैकांतप्रतिक्षेपः । पूर्वापरस्वभावपरिहारावाप्तिलक्षणामर्थक्रियां कौटस्थ्येऽपि ब्रुवाणः कथमनुन्मत्तः ? कारकज्ञापकहेतुव्यापारासंभवात् । परिणामविवर्तधर्मावस्थाविकाराणां स्वभावपर्यायत्वात् । तदेतद्विनाशोत्पत्तिनिवारणमबुद्धिपूर्वकं प्रत्यक्षादिविरोधात् क्षणिकैकांतवत् ॥ ३७ ॥

प्रमाणकारकैर्व्यक्तं व्यक्तं चेदिंद्रियार्थवत् ।
ते च नित्ये विकार्यं किं साधोस्ते शासनाद्बहिः ॥ ३८ ॥

वृत्तिः—प्रमाणानि प्रत्यक्षादीनि। कर्तृकर्मकरणसंप्रदानापादानाधिकरणानि कारकाणि तैर्व्यक्तं प्रकाशितं व्यंजितं कृतं। व्यक्तं महदादि। यथेंद्रियैश्चक्षुरादिभिरर्थो विषयः। चेद्यद्येवं। ते च व्यंग्यव्यंजके नित्ये अविचलितैकरूपे। किं विकार्यं यात्रता हि न किंचिदपि। तव साधोर्मुनेः शासनात् प्रवचनात्। बहिरंतेष्वयमेव हि विकारो यो वस्तुन्यन्यथाभावो व्यक्तिरप्यन्यथाभावः अव्यक्ताद्व्यक्तमन्यत्। तव शासने पुनः सर्वं सुघटम्।

पुनरपि कदर्थयितुमाह—

अष्टशती-अथ मतं—प्रमाणकारकाणि व्यवस्थितमेव भावं व्यंजयंति। चक्षुरादिवत्स्वार्थं ततो न किंचिद्विप्रतिषिद्धं। विषयविशेषविज्ञानादेः शाश्वतत्वान्न किंचिद् व्यक्तार्थं पश्यामः। कथंचिदपूर्वोत्पत्तौ तदेकांतविरोधात् तदभावविकार्य्यानुपपत्तेः। न वै किंचिद्विरुद्धं कार्यकारणभावाभ्युपगमात् इत्यनालोचितसिद्धांतः॥

यदि सत्सर्वथा कार्यं पुंवन्नोत्पत्तुमर्हति।
परिणामप्रक्लृप्तिश्च नित्यत्वैकांतबाधिनी॥ ३९॥

वृत्तिः—असत्किंचिदपि नोपपद्यते सर्वं सर्वत्र सर्वस्मादत आह। यदि सर्वथा विश्वप्रकारैर्यथा शक्त्यात्मना एवं व्यक्तात्मनापि कार्यं घटादिकं सत् विद्यमानं पुमानिव पुंवत् सांख्यपरिकल्पितपुरुषवत्। नोत्पत्तुं नो प्रादुर्भवितुमर्हति योग्यं भवति। यद्यत्सर्वथा सत् न तदुत्पद्यते यथा सांख्यपुरुषः सच्च सर्वथा कार्यं तस्मान्नोत्पद्यते। अथ व्यवस्था तस्य द्रव्यस्य धर्मांतरत्यागैर्धर्मांतरोपजनितः परिणाम इष्यते? अत आह परिणामस्य प्रक्लृप्तिः कल्पना समर्थनं च सर्वस्य नित्यत्वमिति योऽयमेकांतस्तस्य बाधिनी निराकरणशीला विरोधिनी इत्यर्थः।

अतो बन्धमोक्षादिकमत्र न संभवति नित्यत्वात्प्रकृतिपुरुषयोस्तव मते पुनः संभवतीत्याह—

अष्टशती-न तावत्सतः कार्यत्वं चैतन्यवत्। नाप्यसतः सिद्धांतविरोधात् गगनकुसुमवत्। नापरमेकांतप्रकारांतरमस्ति। विवर्तादेः पूर्वोत्तरस्वभावप्रध्वंसोत्पत्तिलक्षणत्वात्। तदेतत्त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात्-अपेतमप्यस्ति विनाशप्रतिषेधात् इत्यनेकांतोक्तिरंधसर्पबिलप्रवेशन्यायमनुसरति॥ ३९॥

पुण्यपापक्रिया न स्यात् प्रेत्यभावः फलं कुतः।
बंधमोक्षौ च तेषां न येषां त्वं नासि नायकः॥ ४०॥

वृत्तिः—मैत्रीप्रमोदकरुणादिक्रियाऽभावे कुतः पुण्यहेतुत्वात् पुण्यं। हिंसादिरशुभपरिणामः पापहेतुत्वात्पापं। तयोः क्रिया क्षयोपार्जनं न स्यान्न भवेत् अत एव क्रियाऽभावे कुतः प्रेत्यभावः? जन्मांतरफलं च सुखदुःखादिरूपं कुतः? बंधः कर्मणाऽस्वतंत्रीकरणं मोक्षः स्वात्मोपलब्धिः एतौ च द्वौ तेषां न येषां त्वं नासि—न भवसि नायकः प्रभुः? किमुक्तं भवति एतत्सर्वं त्वच्छासन एव नान्येषां नित्यत्ववादिनां कुतः? विक्रियाऽभावात्॥

न केवलं नित्यैकांत एतेषामभावः किंतु—

अष्टशती-नैतत्प्रेक्षापूर्वकारिभिराश्रयणीयं पुण्यपापप्रेत्यभावबंधमोक्षविकल्परहितत्वात् नैरात्म्यादिवत्। न चैतत्क्वचिदेकांते संभवति॥ ४०॥

क्षणिकैकांतपक्षेऽपि प्रेत्यभावाद्यसंभवः।
प्रत्यभिज्ञाद्यभावान्न कार्यारंभः कुतः फलं॥ ४१॥

वृत्तिः—क्षणिको निरन्वयविनाशः स एवैकांतपक्षस्तस्मिन्नपि प्रेत्यभावादीनां जन्मांतरादीनामसंभवो ऽभावः। प्रत्यभिज्ञा स एवायमिति ज्ञानं सा आदिर्येषां ते प्रत्यभिज्ञादयस्तेषामभावस्तस्मान्न कार्यारंभ ओ-

दनवटादेरारंभ आदिक्रिया। अतः कुतः फलं समर्पणादिकं परिहारोऽनिष्टस्य। अस्मादेतत्कार्यं भविष्यति नान्यस्मादेतदपि न संभवत्येव। आदिशब्देन पर्यालोचनाध्यवसायादीनां ग्रहणं। यदि कश्चित् स्थिरः कर्ता स्यादुपादानादीन्यपि यदि स्थिराणि संत्यस्य कार्यस्य, एतद्योगे[1] एव तन्निराकरणमपि। कथंचिद्यदि कार्यरूपेण परिणमति[2] तदा सर्वं सुघटं नान्यथा ॥ ४१ ॥

तत्र कारणे कार्यं मनागपि नास्तीति चेदत आह—

**अष्टशती**-क्षणक्षयैकांतदर्शनं-अहितं, असंभवत्प्रेत्यभावादित्वात् उच्छेदैकांतवत्। ध्रौव्यैकांताभ्युपगमवद्वा। भिन्नकालक्षणानामसंभवद्वासनत्वात् अकार्यकारणवत्। न विनष्टं कारणमसत्त्वाच्चिरतरातीतवत्। समनंतरत्वेऽप्यभावाविशेषात्। न च पूर्वस्योत्तरं कार्यं तदसत्येव हि भावात् वस्त्वंतरवत् अतिक्रांततमवद्वा नहि समर्थेऽस्मिन् सति स्वयमनुत्पित्सोः पश्चाद्भवतस्तत्कार्यत्वं? समनंतरत्वं वा नित्यवत्। कारणाभावाविशेषेऽपि कार्योत्पत्तिसमयनियमावक्लृप्तौ कस्यचित् कौटस्थ्येऽपि तत्कारणसामर्थ्यसद्भावाभेदेपि कार्यजन्मनः कालनियमः किं न स्यात्? विशेषाभावात्। तथा चाकस्मिकत्वं स्यात्। उभयत्राविशेषेण कथंचिदनुपयोगेऽपि क्वचिद् व्यपदेशकल्पनायामन्यत्रापि किं न भवेत्क्षणस्थितिः-। एकोऽपि भावोऽनेकस्वभावः चित्रकार्यत्वात् नानार्थवत्। न हि कारणशक्तिभेदमंतरेण कार्यनानात्वं युक्तं रूपादिज्ञानवत्। अन्यथा रूपादेर्नानात्वं न सिद्ध्येत् चक्षुरादिसामिग्रीभेदात् तज्ज्ञाननिर्भासभेदोऽवकल्पेत। युगपदेकार्थोपनिबद्धदृष्टीनामपि भवितव्यमेव प्रतिभासभेदेन कारणसामिग्रीभेदात्। अन्यथा दर्शनभेदोऽपि माभूत्। प्रत्यासन्नेतरयोर्वैशद्येतरनिर्भासोपलब्धेः। सेयमुभयतः पाशारज्जुः। सकृत्कारणस्वभावभेदमंतरेण यदि कार्यनानात्वं क्रमशोऽपि कस्यचिदपेक्षितसहकारिणः कार्यसंततिः किं न स्यात्। सहकारिणस्तद्धेतुस्वभावममेदयंतोऽपि कार्यभेदहेतवः स्युः क्षणक्षयवत्। न हि कादाचित्कानि तत्कर्तुं समर्थानीति स्थिरोऽर्थस्तत्कारणस्वभावं जहाति तद्बुद्धिपूर्वकत्वाभावात्। क्षणिकसामिग्रीसन्निपतितैककारणांतरवत्। कल्पयित्वापि स्वहेतुप्रकृतिं भावानां स्वप्रकृतिरवश्यं-अन्वेष्याः। तत्स्वभाववशात्तत्कारणप्रकृतिव्यवस्थापनात्। तदयमकारणोऽपि स्वभावनियतोऽर्थः स्यात्। यद्यद्भावं प्रत्यनपेक्षं तत्तद्भावनियतं तथा विनाशं प्रत्यनपेक्षं विनश्वरं तथैव स्थितिं प्रत्यनपेक्षं स्थास्नु तद्धेतोरकिंचित्करत्वात् तद् व्यतिरिक्ताव्यतिरिक्ताकारणात् इत्यादि सर्वं समानं। आदौ स्थितिदर्शनात् विद्युत्प्रदीपादेरंतेऽपि स्थितेरनुमानं युक्तं। अन्यथांते क्षयदर्शनात् आदौ तत्प्रतिपत्तिरसमंजसैव तादृशः कारणादर्शनेऽपि कथंचिदुपादानानुमानवत् तत्कार्यसंतानस्थितिरदृष्टाप्यनुमीयेत। तस्मात्कथंचन स्थितिमतः प्रतिक्षणं विवर्तोऽपि नान्यथा प्रभावादेरयोगात्। कुतः प्रेत्यभावादिः? सत्यपि हेतुफलभावे कारणकार्यांतरवत् संततिर्न स्यात्। अतादात्म्याविशेषात् तत्स्वभावविशेषावक्लृप्तौ तादात्म्येऽपि कोऽपरितोषः? विरोधस्य सर्वथाप्यपरिहार्यत्वात्। तत्संतानपेक्षया प्रेत्यभावादिः मामंस्त ज्ञानज्ञेययोः प्रतिक्षणं विलक्षणत्वात्। न वै प्रत्यभिज्ञादिः पुरुषांतरवदर्थांतरवच्च। ततः कर्मफलसंबंधोऽपि नानासंतानवदनियमात् न युक्तिमवतरति। तत्सूक्तं क्षणिकपक्षो विद्वद्भिरनादरणीयः सर्वथार्थक्रियाविरोधात् नित्यत्वैकांतवत्। सत्येव कारणे यदि कार्यं त्रैलोक्यमेकक्षणवर्ति स्यात्। ततः संतानाभावात् पक्षांतरासंभवाच्चेति स्थितमेतत् ॥ ४१ ॥

**यद्यसत्सर्वथा कार्यं तन्माजनि खपुष्पवत्।**
**मोपादाननियामोभून्माऽऽश्वासः कार्यजन्मनि ॥ ४२ ॥**

वृत्तिः—सर्वथा शक्तिव्यक्तिस्वरूपेण यदसदविद्यमानं तत्कार्यं माजनि माभूत्। खपुष्पं गगनकुसुमं तदिव खपुष्पवत्। उपादानं मृत्पिंडतत्त्वादिकं तस्य नियामोऽस्मादेतत्कार्यं भवतीति निश्चयः सोऽपि माभूत्। आश्वासोऽस्मादेतद्भविष्यत्ययमपि माभूत्। कार्यजन्मनि कार्योत्पत्तौ ॥ ४२ ॥

पुनरपि दोषमुद्भावयितुमाह—

१। एतद्योग्यमेव पाठोऽयं लिखितपुस्तके। २ परिणमनमपि पाठोयं मुद्रितपुस्तके।

अष्टशती–कथंचित् सतः कार्यत्वं-उपादानस्योत्तरीभवनात् सकृदपि विरुद्धधर्माध्यासानिराकृतेः। तथा चान्वयव्यतिरेकप्रतीतेर्भावस्वभावनिबंधनायाः किं फलमपलापेन । तदन्यतरनिराकृतावुभयनिराकृतिः-अभेदात् । तन्नासत्कार्यं सर्वथानुत्पादप्रसंगात् खपुष्पवत् । न तादृशकारणवत् सर्वथाऽभूतत्वात् बंध्यासुतवत् । कथंचिदस्थितानुत्पन्नत्वादिति योज्यं । सत्यपि प्रभवलक्षणे पूर्वपूर्वस्योत्तरीभवनं मृत्पिंडस्थासकोशकुशूलादिषु सकललोकसाक्षिकं, स्वमनीषिकाभिः सदृशापरापरोत्पत्तिविप्रलंभानवधारणावक्लृप्तिमारचयतां मोपादाननियामोऽभूत्कारणांतरवत् तदन्वयाभावाविशेषात् सर्वथा वैलक्षण्यात् । निरन्वयस्यापि तादृशी प्रकृतिरात्मानं कारणांतरेभ्यो यया विशेषयतीति चेत् ? न अत्यंतविशेषानुपलब्धेः । तदविशेषादर्शने सर्वथा साध्यं स्यात् । तस्मात् इयमस्य प्रकृतिर्यया पूर्वोत्तरस्वभावहानोपादानाधिकरणस्थितिं प्रतिक्षणं बिभर्ति यतोऽयमुपादाननियमः सिद्धः । अथापि कथंचिदुपादाननियमः कल्प्येत कार्यजन्मनि कथमाश्वासः ? तदत्यंतासतः-कार्यस्योत्पत्तेः तंतुभ्यः पटादिरेव न घटादिरिति निर्हेतुको नियमः स्यात् । पूर्वपूर्वविशेषादुत्तरोत्तरनियमकल्पनायामनुपादानेऽपि स्यात् । तथादर्शनमहेतुरत्रैव विचारात् कथंचिदाहितविशेषतंतूनां पटस्वभावप्रतिलंभोपलंभात् । तदन्यतरविधिप्रतिषेधनियमनिमित्तात्ययात् प्रतीतिरलमपलापेन । तस्मादुभयलक्षणप्राप्तानुपलब्धिरन्वयस्यैव न पुनरुभयरूपस्येत्यलं प्रसंगेन ॥ ४२ ॥

न हेतुफलभावादिरन्यभावादनन्वयात् ।
संतानांतरवन्नैकः संतानस्तद्वतः पृथक् ॥ ४३ ॥

वृत्तिः–क्षणिकैकांतपक्षे हेतुः-कारणं । फलं-कार्यं तयोर्भावोऽस्तित्वं स आदिर्यस्य स हेतुफलभावादिरुपादानोपादेयस्वरूपं कार्यकारणभावो वाच्यवाचकभावश्च न स्यात् । कुतः ? अन्यभावादत्यंतपृथक्त्वात् । तदपि कुतः ? अनन्वयादेकस्य पूर्वापरावस्थाऽभावात्[1] । तथा संतानांतरे प्रस्तुतसतानादन्यः संतानः संतानांतरं तस्मिन्यथा न संभवति कार्यकारणभावः मृत्पिण्डात्पटइव[2] । अभ्युपगम्यैतदुक्तं परमार्थतस्तु संतानिभ्यो भिन्नेभ्यः पृथग्भूतेषु, ततो न कश्चिदेकः संतानोऽनुगतैकाकारः । अन्यानन्यभावाभ्यां निराकृतत्वात् । तस्मान्न संतानो नापि संतानिन इति ॥ ४३ ॥

पुनरपि तस्य दूषणमाह–

अष्टशती-विलक्षणानामत्यंतभेदेपि स्वभावतः किलासंकीर्णाः संततयः कर्मफलसंबंधादिनिबंधनं शशविषाणस्येव वर्तुलत्वमारचितं कश्चेतनः श्रद्दधीत ? ॥ ४३ ॥

अन्येष्वनन्यशब्दोऽयं संवृतिर्न मृषा कथं ।
मुख्यार्थः संवृतिर्नास्ति विना मुख्यान्न संवृतिः ॥ ४४ ॥

वृत्तिः–मतं संतानिभ्यो व्यतिरिक्तः संतानो नास्ति किं तु अन्येषु पृथग्भूतेषु योऽयमनन्यशब्दोऽनन्यबुद्धिश्च संतानः सा संवृतिरुपचारः । यद्येवं कथं सा न मृषा व्यलीका भवेत् ? । न च मुख्यार्थः संवृतिरस्ति तस्यास्तुच्छरूपत्वात्[3] । संवृतिस्तूपचारः । न च मुख्यार्थमंतरेण संवृतिः, सति मुख्यार्थे तस्याः संभवो यथा सिंहोऽयं माणवकः, सति मुख्यसिंहे माणवके सिंहकल्पना । न चैवं संवृतेरस्ति मुख्यार्थ इति ॥ ४४ ॥

अथैवं परिकल्प्यते–

अष्टशती-संतानिभ्योऽनन्यः संतानः अन्यथा आत्मनो नामांतरकरणात्-नित्यानित्यविकल्पानुपपत्तेः ।

---

१ पूर्वापरमावात् पाठोऽयं लिखितपुस्तके । २ मृत्पिंडात्पट इव पाठो मुद्रितपुस्तके । ३ तस्याः शब्दरूपत्वात् पाठोयं लिखित पुस्तके ।

अपि तु तेष्वनन्यव्यवहारादेकत्वमुपचरितमिति । व्यर्थकव्यवहारेऽपि विशेषानुपपत्तेः संबंधनियमाभावस्तद-वस्थः । उपचारस्तु नर्ते मुख्यात् यथाग्निर्माणवक इति स्खलति हि तत्रानन्यप्रत्ययः परीक्षाऽक्षमत्वात् । तत एवामुख्यार्थः प्रस्तुताताघनं ॥ ४४ ॥

चतुष्कोटेर्विकल्पस्य सर्वांतेषूक्तययोगतः ।
तत्त्वान्यत्वमवाच्यं च तयोः संतानतद्वतोः ॥ ४५ ॥

वृत्तिः—यथा सर्वधर्मेषु चतस्रः कोटयो सत्त्वैकत्वादिषु विभागा यस्यासौ चतुष्कोटिर्विकल्पस्तस्य सदसदुभयादिभेदभिन्नस्य विकल्पस्य । उक्तिर्वचनं तस्या अयोगोऽसंभवः ततः । तयोः संतानतद्वतोश्चतुष्को-टेर्विकल्पस्य वचनस्यायोगात्तत्त्वान्यत्वमेकत्वानेकत्वमवाच्यं ॥ ४५ ॥

चेदत आह—

अष्टशती-सत्त्वैकत्वादिषु सर्वधर्मेषु सदसदुभयानुभयचतुष्कोटेरभिधातुमशक्यत्वात् संतानतद्वतोरपि भेदाभेदोभयानुभयचतुष्कोटेरनभिलाप्यत्वं । सत्त्वे तदुत्पत्तिविरोधात्-असत्त्वे पुनरुच्छेदपक्षोपक्षिप्तदोषात् । उभयत्रोभयदोषप्रसंगात् । अनुभयपक्षेऽपि विकल्पानुपपत्तिरित्यादि योज्यं ॥ ४५ ॥

अवक्तव्यचतुष्कोटिविकल्पोऽपि न कथ्यतां ।
असर्वांतमवस्तु स्यादविशेष्यविशेषणं ॥ ४६ ॥

वृत्तिः—तर्ह्यवक्तव्यचतुष्कोटिविकल्पोऽपि यः सोऽपि न कथ्यतां नोच्यतां माभाणीदित्यर्थः । अन्यथा भेदाभेदोभयानुभयस्वरूपेणाभिलाप्यत्वे कथंचिदनभिलाप्यत्वं स्यात्। अन्यच्चैवं सति असर्वांतं सर्वविकल्पाती-तमवस्तु स्यात् । अविशेष्यविशेषणं स्यात् । विशेष्यत इति विशेषः विशेष्यतेऽनेनेति विशेषणं तयोरभावात् ॥ ४६ ॥

अन्यच्च प्रतिषेधोऽपि न घटते, तत्कथमत आह—

अष्टशती-न हि सर्वथानभिलाप्यत्वेऽनभिलाप्यचतुष्कोटेरभिधेयत्वं युक्तं कथंचिदभिलाप्यत्वप्रसंगात् । अपि चैवं सति सर्वविकल्पातीतमवस्त्वेव स्यादन्यत्र वाचोयुक्तेः ॥ ४६ ॥

द्रव्याद्यंतरभावेन निषेधः संज्ञिनः सतः ।
असद्भेदो न भावस्तु स्थानं विधिनिषेधयोः ॥ ४७ ॥

वृत्तिः—द्रव्यमादिर्येषां ते द्रव्यक्षेत्रकालभावास्तेभ्योऽन्यानि द्रव्याद्यंतराणि तेषामभावस्तेन परद्रव्य-परक्षेत्रपरकालपरभावस्वरूपेण यः प्रतिषेधः सतो विद्यमानस्य । संज्ञिनो नामवतो भवति। यः पुनरसद्भेदो ऽभावविशेषः परपरिकल्पितो नासौ भावः स्वलक्षणं । विधिनिषेधयोरस्तित्वनास्तित्वयोः । स्थानमास्पदं । कुतः? सर्वथा तस्य तुच्छत्वात् । तस्माद्भाव एव विधिनिषेधयोरवस्थानं तस्यैव स्वपररूपेणास्तित्वनास्तित्वं॥

यतः—

अष्टशती-द्रव्यक्षेत्रकालभावांतरप्रतिषेधः संज्ञिनः सतः क्रियते न पुनरसतस्तस्य विधिप्रतिषेधाविषय-त्वात्। नचैतद्विरुद्धं? स्वलक्षणमनिर्देश्यमित्यादिवत् । अभावोऽनभिलाप्य इत्यपि भावाभिधानादेकांतवृत्तावेव दोषात्। भावाभिधानैरपि कथंचिदभावाभिधानात् ॥ ४७ ॥

अवस्त्वनभिलाप्यं स्यात् सर्वांतैः परिवर्जितं ।
वस्त्वेवावस्तुतां याति प्रक्रियाया विपर्ययात् ॥ ४८ ॥

वृत्तिः—सर्वांतैः सर्वधर्मैः । परिवर्जितं विरहितं । सर्वथा यत्तदनभिलाप्यमवाच्यमवस्तु स्यात् न किंचिदपि भवेत् परपरिकल्पितं । कथं तर्ह्यवस्तुत्वमत आह-वस्त्वेवावस्तुतां याति-अर्थक्रियायाः सर्व एव

पदार्थो भवति । कुतः ? प्रक्रियायाः स्वरूपादिचतुष्टयलक्षणायाः विपर्ययात्पररूपादिचतुष्टयात् । तस्माद्यदवस्तु तदनभिलाप्यं यथा न किंचित् । यत्पुनरभिलाप्यं तद्वस्तु यथा खपुष्पं । तस्मादेतदेवैकस्योपलब्धिर्यदन्यस्यानुपलब्धिरिति ॥

पुनरप्यवक्तव्यवादिनमुपालभते—

**अष्टशती**-भावव्यतिरेकवाचिभिरपि वाक्यतामापन्नैर्भावाभिधानात्, नात्र किंचिद्विरुद्धं । अतः सूक्तं यदवस्तु तदनभिलाप्यं यथा न किंचित् । यत्पुनरभिलाप्यं तद्वस्त्वेव यथा खपुष्पं । अन्यस्य कैवल्यमितरस्य वैकल्यं, स्वभावपरभावाभ्यां भावाभावव्यवस्थितिर्भावस्य ॥ ४८ ॥

**सर्वांताश्चेदवक्तव्यास्तेषां किं वचनं पुनः ।**
**संवृतिश्चेन्मृषैवैषा परमार्थविपर्ययात् ॥ ४९ ॥**

**वृत्तिः**—यदि सर्वांताः सर्वधर्मा अवक्तव्या अवाच्यास्तेषां मतानां यदेतद्वचनमुक्तिः "सर्वथा प्रतिक्षणं निरन्वयविनाशिनो निरंशाः सजातीयविजातीयव्यावृत्ता इत्यादिकं" पुनः पुनरावर्तमानं किमर्थं स्यात् । अथ मतं परमार्थं न तद्वचेत्किं तु संवृतिः । यद्येवं मृषैवैषा व्यलीकैव सा । कुतः ? परमार्थस्य तत्स्वरूपस्य विपर्ययोऽभावः यतः । संवृतिर्नामोपचारः, न च सा परमार्थमंतरेण भवति ॥ ४९ ॥

**अष्टशती**—पुनरपि—अवक्तव्यवादिनं पर्यनुयुंज्महे—सर्वधर्मा यदि वाग्गोचरतामतीताः, कथमिमेऽभिलाप्यंते इति । संवृत्त्या इति चेत् ? न विकल्पानुपपत्तेः । स्वरूपेण चेत् ? कथमनभिलाप्याः ? पररूपेण चेत्तेषां स्वरूपं स्यात् केवलं वाचः स्खलनं गम्यते । उभयपक्षेऽप्युभयदोषप्रसंगः । तत्त्वेन चेत् ? कथमवाच्याः । मृषात्वेन चेत् ? कथमुक्ताः तदलमप्रतिष्ठितमिथ्याविकल्पौघैः ॥ ४९ ॥

**अशक्यत्वादवाच्यं किमभावात्किमबोधतः ।**
**आद्यंतोक्तिद्वयं न स्यात् किं व्याजेनोच्यतां स्फुटं ॥ ५० ॥**

**वृत्तिः**-इदं तावदवक्तव्यवादी प्रष्टव्यः । किमशक्यत्वादसामर्थ्यादवाच्यं ? आहोस्विदभावात् ? किमज्ञानात् ? विकल्पत्रयं । न तावदशक्यत्वाद्दशनागसहस्रबलवत्त्वाद् बुद्धस्य । नाप्यज्ञानात्सर्वज्ञत्वेन परिकल्पितं यतः । यस्मादाद्युक्तिरादिविकल्पोऽतोक्तिस्तृतीयविकल्प एतद्द्वयं न भवेत् । तस्मात्किं व्याजेन छद्मना ? उच्यतां भण्यतामभावादेवावाच्यं स्फुटमिति । न चैतदभावमात्रं प्रमाणसिद्धं प्रमाणस्याप्यभावात् ॥ ५० ॥

क्षणिकैकांतवादिकल्पिता हिंसा पंचभिः कारणैः प्राणप्राणिज्ञानव्याघातचित्ततद्गतचेष्टाप्राणवियोगैर्न, बंधमोक्षादिश्च न घटत इत्याह—

**अष्टशती**-अर्थस्यानभिलाप्यत्वं अभावात्, वक्तुरशक्तेः ? अनवबोधाद्वा प्रकारांतराभावाद्वा ? बुद्धिकरणपाटवापेक्षत्वात् ? न च सर्वत्र तदभावो युक्तः ततो नैरात्म्यान्न विशिष्यते मध्यमपक्षावलंबनात् । अशक्यसमयत्वात् अनभिलाप्यमर्थरूपमिति चेन्न कथंचिच्छक्यसंकेतत्वात्, दृश्याविकल्पस्वभावत्वात् परमार्थस्य प्रतिभासभेदेऽपि इत्युक्तं । विषयविषयिणोर्भिन्नकालत्वं प्रत्यक्षेऽपि समानं । अविपरीतविप्रतिपत्तिरन्यत्रापि । दर्शनविकल्पयोः परमार्थैकतानत्वाभावे न किंचित्सिद्धं दृष्टस्यानिर्णयात् अदृष्टकल्पत्वात् । अदृष्टानिर्णयस्य प्रधानादिविकल्पाविशेषात् ॥ ५० ॥

**हिनस्त्यनभिसंधातृ न हिनस्त्यभिसंधिमत् ।**
**बद्ध्यते तद्द्वयापेतं चित्तं बद्धं न मुच्यते ॥ ५१ ॥**

**वृत्तिः**—क्षणिकैकांतवादेऽभिसंधिमत् मारणाभिप्रायवत् । चित्तं तत्परिकल्पितरूपज्ञानं जीवसदृशं तत्प्राणिनं न हिनस्ति न मारयति । यच्च हिनस्ति तदनभिसंधातृ अनभिप्रायवत् । बंध्यते च कर्मणा तद्द्वयापेतं ॥ ५१ ॥

तद्वचनविरोधं दर्शयति—

**अष्टशती**–संतानादेरयोगात्, इति कर्तव्यतासु चिकीर्षोर्विनाशात् कर्तुरचिकीर्षत्वात् सदुभयावनिर्मुक्तस्य बंधात् तदविनिर्मुक्तेश्च, यमनियमादेरभिधेयत्वं कुर्वतो वा यत्किंचनकारित्वं ॥ ५१ ॥

**अहेतुकत्वान्नाशस्य हिंसाहेतुर्न हिंसकः ।**
**चित्तसंततिनाशश्च मोक्षो नाष्टांगहेतुकः ॥ ५२ ॥**

**वृत्तिः**–यो हिंसाया हेतुर्निमित्तं नासौ हिंसकः प्राणवियोजकः कुतोऽहेतुकत्वान्नाशस्य। यदेतत्प्राणिनो मरणनिमित्तं यच्च मोक्षस्तैरभ्युपगतः चित्तानां रूपविज्ञानलक्षणानां संततिर्नैरंतर्यं तस्य नाशः क्षयः प्रदीपनिर्वाणरूपो वा । अष्ट अंगान्यवयवा यस्य स हेतुर्यस्यासौ अष्टांगहेतुकः । कानि तान्यष्टांगानि सम्यक्त्व-संज्ञा-संज्ञि-वाक्कायकर्म–अंतर्व्यायाम-स्मृति-समाधिलक्षणानि । सोऽपि न स्यात् । कुतः स्वत एव–हेतुमंतरेणाभ्युपगतत्वात् ॥ ५२ ॥

अथ मतं स्वभावविनाशार्थं न निमित्तमस्माभिरिष्यते, किं तु विभागार्थमित्यत आह—

**अष्टशती**-अहेतुं विनाशमभ्युपगम्य कस्य चिद् यदि हिंसकत्वं ब्रूयात् कथमविक्लवः ? तथा निर्वाणं संतानसमूलप्रहरणलक्षणं सम्यक्त्वसंज्ञासंज्ञिवाक्कायकर्मांतर्व्यायामजीवस्मृतिसमाधिलक्षणाष्टांगहेतुकं ? तदन्योऽन्यं विप्रतिषेधात् ॥ ५२ ॥

**विरूपकार्यारम्भाय यदि हेतुसमागमः ।**
**आश्रयिभ्यामनन्योऽसावविशेषादयुक्तवत् ॥ ५३ ॥**

**वृत्ति**—विरूपकार्यं विभागसन्तानः कपालादिस्तस्यारम्भस्तस्मै विरूपकार्यारंभाय । यदि हेतोः समागमः कारणापेक्षणं । तर्ह्यसौ विरूपकार्यारम्भ आश्रयिभ्यामुत्पादविनाशाभ्यामनन्योऽभिन्नः । कुतः? अविशेषादभेदात् । अविशेषेणाभेदोनोपलब्धिराश्रयिभ्यो यतः । अयुक्तवत् यथा ग्राह्यग्राहकाकारा सहायुतसिद्धिः ॥

चित्तविशेषरूपरसादिवद्वान् प्रागुत्पादादीनभ्युपगम्य क्षणिकवादे दूषणमभाणि । साम्प्रतं तु तेषामुत्पादादीनामसभवमेव दर्शयन्नाह—

**अष्टसती**-विसभागसंतानोत्पादनाय हेतुसन्निधिर्न प्रध्वंसाय पूर्वस्य स्वरसनिवृत्तेः इति चेत् ? स पुनरुत्तरोत्पादः स्वरसतः किं न स्यात् विनाशहेतुवत् । स्वरसोत्पन्नमपि तदनंतरभावित्वात् तेन व्यपदिश्यते ? इति चेत् इतरत्र समानं । परमार्थस्तदहेतुकत्वं, प्रतिपत्रभिप्रायाविशेषेऽपि स्वतः प्रहाणवादी न शक्नोत्यास्मानं न्यायमार्गमनुकारयितुं सर्वदा विरूपकार्यत्वात् । सभागविसभागावक्लृप्तिं प्रतिपत्रभिप्रायवशात् समनुगच्छन् सहेतुकं विनाशं ततः किं नानुजानीयात् । नच समनंतरक्षणयोर्नाशोत्पादौ पृथग्भूतौ मिथः स्वाश्रयतो मा यौ समं सहेतुकेतरौ स्तां । प्रत्यभिधानभेदेऽपि ग्राह्यग्राहकाकारवत् स्वभावप्रतिबंधात् संज्ञाछंदमतिस्मृत्यादिवत् सत्यपि भेदे समकालभाविनोः कथं सहकारी पुनरन्यतरस्यैव हेतुरहेतुर्वा कार्यरूपादेरिव कारणं । तस्मात्कार्यकारणयोरुत्पादविनाशौ न सहेतुकाहेतुकौ सहभावाद्रसादिवत् । न तस्य किंचिद्भवति । न भवत्येव केवलमिति चेत् भवत्येव केवलमिति समानं । तस्मादयं विनाशहेतुर्भावमभावीकरोति न पुनरकिंचित्करः, कार्योत्पत्तिहेतुर्वा, यद्यभावं न भावी कुर्यात् भावं करोतीति कृतस्य करणायोगात्–अकिंचित्करः । तदतत्कारणादिविकल्पसंहतिरुभयत्र सदृशी ॥ ५३ ॥

**स्कंधाः संततयश्चैव संवृतित्वादसंस्कृताः ।**
**स्थित्युत्पत्तिव्ययास्तेषां न स्युः खरविषाणवत् ॥ ५४ ॥**

१. तस्य बद्धस्य अविनिर्मुक्तेरित्यर्थः ।

वृत्तिः—स्कंधा रूपवेदनाविज्ञानसंज्ञासंस्कारास्तेषां संततयश्च कार्यकारणयोराविच्छेदाः । एवकारोऽवधारणार्थः । असंस्कृता एवापरमार्था एव । कुतः ? संवृतित्वान्मिथ्यारूपत्वात् । अतस्तेषां स्थितिः । सदवस्थानमुत्पत्तिर्घटावस्था, विनाशः कपालादिरूपत्ते न स्युर्न भवेयुः खरविषाणवत् । यथा खरविषाणस्य स्थित्युत्पत्तिव्यया न सन्त्येवमेतेषां, अभावं प्रत्यविशेषात् । यत्पुनः संस्कृतं तत्परमार्थसत् यथा स्वलक्षणम् । न तथा स्कंधाः संततयश्च । ततः स्थित्युत्पत्तिविपत्तिविरहस्ततोऽपि विभागसंतानोत्पत्तये विनाशहेतुरिति पोप्लूयते ॥

यस्य मिथ्यादृश उभयैकांतपक्षस्तन्निरासार्थमाह—

अष्टशती-रूप-वेदना-विज्ञान-संज्ञा-संस्कारस्कंधसंततयोऽसंस्कृताः संवृतित्वात् । यत्पुनः संस्कृतं तत्परमार्थसत् । यथा स्वलक्षणं । न तथा स्कंधसंततयः । ततः स्थित्युत्पत्तिविपत्तिरहिताः । ततो विसभागसंतानोत्पत्तये विनाशहेतुरिति पोप्लूयते ॥ ५४ ॥

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां ।
अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ५५ ॥

वृत्तिः—उभयैकात्म्यं नित्यानित्यैकांतद्वयमयुक्तमंगीकर्तुं, कुतः? मिथ्यादृशां तद्विरोधात् । अनभिलाप्यमपि न युक्तमनेकांतवैरिणां ॥ ५५ ॥

एकांतवादिपक्षं निरस्यानेकांतं समर्थयन्नाह—

अष्टशती-नित्यत्वेतरैकांतद्वयमप्ययुक्तमंगीकर्तुं विरोधात् युगपज्जीवितमरणवत् नित्यत्वानित्यत्वाभ्यां । अत एवानभिलाप्यमित्ययुक्तं ? तदेकांतेऽनभिलाप्योक्तेरनुपपत्तेः ॥ ५५ ॥

नित्यं तत् प्रत्यभिज्ञानान्नाकस्मात्तदविच्छिदा ।
क्षणिकं कालभेदात्ते बुद्ध्यसंचरदोषतः ॥ ५६ ॥

वृत्तिः—तच्छब्देन तत्त्वमुच्यते प्रस्तुतत्वात् तत्त्वं कथंचिन्नित्यं प्रत्यभिज्ञानात् । वस्तुनः पूर्वापर कालव्याप्तिज्ञानं प्रत्यभिज्ञानं । यथा स एवायं देवदत्त इत्यादि । तस्मात्प्रत्यभिज्ञानात् । तस्य प्रत्यभिज्ञानस्य अविच्छिदा अविच्छेदोऽन्वयः । सोऽकस्मात् । अहेतोर्न भवति यस्मात् । न च नित्यत्वमेव । कालभेदात्परिणामवशात् क्षणिकं नश्वरं । तवार्हद्भट्टारकस्य नान्यस्य क्षणिकाक्षणिकवादिनः । बुद्धेरसंचारोऽसंचरणमन्यत्रागमनं स एव दोषस्तस्मात् । न हि एकं पदार्थं विज्ञायान्यस्य पदार्थस्य परिच्छित्तिः संभवति । उभयैकांते पुनः सुघटा ॥ ५६ ॥

तदेव दर्शयति—

अष्टशती-तदेकांतद्वयेऽपि परामर्शप्रत्ययानुपपत्तेरनेकांतः । स्थित्यभावे हि प्रमातुरन्येन दृष्टं नापरः प्रत्यभिज्ञातुमर्हति । संबधविशेषेऽपि पित्रेव पुत्रः सत्यप्यतिशयः पृथक्त्वं न निराकरोति । तदेवान्यत्रापि प्रत्यभिज्ञातुमर्हति । संबधविशेषेऽपि पित्रेव पुत्रः सत्यप्यतिशयः पृथक्त्वं न निराकरोति । तदेवान्यत्रापि प्रत्यभिज्ञातुमर्हति । संबधविशेषेऽपि पित्रेव पुत्रः सत्यप्यतिशयः पृथक्त्वं न निराकरोति । तदेवान्यत्रापि

प्रत्यवमर्शाभावनिबंधनमेकसंतत्या प्रत्यभिज्ञानं प्रत्यभिज्ञानबलाच्चैकसंततिरिति व्यक्तमितरेतराश्रयणमेतत् । न च पक्षांतरे समानं स्थितेरनुभवात् । तद्विभ्रमकल्पनायामुत्पादविनाशयोरनाश्वासः । तथानुभवनिर्णयानुपलब्धेर्यथा स्वलक्षणं परिगीयते तत्रैतत्स्यात् । स्वभावाविनिर्भागेऽपि न संकलनं दर्शनक्षणांतरवत् । सत्यमेकांत एवायं दोषः । ततःक्षणिकं कालभेदात्, दर्शनप्रत्यभिज्ञानसमयोरभेदे तदुभयाभावप्रसंगात् । किंच पक्षद्वयेऽपि ज्ञानासंचारानुषंगात् अनेकांतसिद्धिः । अपोद्धारकल्पनया कथंचिज्जात्यंतरेऽपि वस्तुनि प्रत्यभिज्ञानादिनिबंधने स्थित्यादयो व्यवस्थाप्येरन् । न च स्वभावभेदोपलंभेऽपि नानात्वविरोधः संकरानवस्थानुषंगः, चेतसि ग्राह्यग्राहकाकारवत् ॥ ५६ ॥

न सामान्यात्मनोदेति न व्येति व्यक्तमन्वयात् ।
व्येत्युदेति विशेषात्ते सहैकत्रोदयादि सत् ॥ ५७ ॥

वृत्तिः—कथमनेकांतं त्रयमेकस्मिन् संभवति? इति चेदत आह । सामान्यात्मना द्रव्यरूपेण नोदेति नोत्पद्यते न व्येति न विनश्यति कुतोऽन्वयात् सर्वपर्यायेष्वनुगतैकाकारेण वर्तनात् । व्यक्तं स्फुटमेतत् । विशेषात्पर्यायरूपेणोत्पद्यते विनश्यति च । तत्रार्हतः । सह युगपदेकत्रैकस्मिन् वस्तुनि । उदयादि सत्–उत्पादविनाशस्थितयः सत्यो विरोधाभावात् ॥ ५७ ॥

कथं य एवोत्पादः स एव विनाशो यावेव विनाशोत्पादौ तावेव स्थितिः ? इत्यत आह—

अष्टशती-चलाचलात्मकं वस्तु कृतकाकृतकात्मकत्वात् । न हि चेतनस्य अन्यस्य वा सर्वथोत्पत्तिः सदादिसामान्यस्वभावेन सत एवातिशयांतरोपलंभात् घटवत् । कथंचिदुत्पादविगमात्मकत्वादिति योज्यं ॥५७॥

कार्योत्पादः क्षयो हेतोर्नियमाल्लक्षणात्पृथक् ।
न तौ जात्याद्यवस्थानादनपेक्षाः खपुष्पवत् ॥ ५८ ॥

वृत्तिः—योऽयं कार्यस्योत्पादः स एव हेतोरुपादानकारणस्य क्षयो विनाशो नियमान्निश्चयात् । लक्षणात्पुनः पृथग्–भिन्नौ स्वरूपभेदात् । जात्यादेरवस्थानात् सत्त्वप्रमेयत्वादिना न तौ भिन्नौ । कुतः ? तेन रूपेणैकत्वात् । अनपेक्षाः परस्परापेक्षामंतरेण ते स्थित्युत्पत्तिविनाशाः खपुष्पसमानाः । तस्मादेते कथंचित् परस्परमभिन्नाः कथंचिद्भिन्नाश्च भवंति ॥ ५८ ॥

लौकिकदृष्टांतेन स्पष्टयन्नाह—

अष्टशती-कार्यकारणयोरुत्पादविनाशौ कथंचिद्भिन्नौ भिन्नलक्षणसंबंधित्वात् सुखदुःखवत् । स्यादभिन्नौ तदभेदस्थितजातिसंख्याद्यात्मकत्वात् पुरुषवत् । उत्पादविगमध्रौव्यलक्षणं स्याद्भिन्नं-अस्खलन्नानाप्रतीतिरूपादिवत् । उत्पादः केवलो नास्ति स्थितिविगमरहितत्वात् वियत्कुसुमवत् । तथा स्थितिविनाशौ प्रतिपत्तव्यौ ॥ ५८ ॥

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयं ।
शोकप्रमोहमाध्यस्थ्यं जनो याति सहेतुकम् ॥ ५९ ॥

वृत्तिः—अयं जनस्त्रितयार्थी यो घटार्थी स तस्मिन् भग्ने शोकं याति । यश्च मौल्यर्थी स तस्मिन्नुत्पन्ने हर्षं याति । यश्च सुवर्णार्थी स माध्यस्थ्यं याति सुवर्णसद्भावात् । नचैतदहेतुकं किंतु सहेतुकमेव । तदेव सुवर्णद्रव्यं घटस्वरूपेण विनश्यति, तदेव मौलिस्वरूपेणोत्पद्यते, सुवर्णस्वरूपेणानुगतैकाकारस्वरूपेण तिष्ठति । एवं सर्वं वस्तु ॥ ५९ ॥

अष्टशती–प्रतीतिभेदमित्थं समर्थयते–घटं भंक्त्वा मौलिनिर्वर्तने घटमौलिसुवर्णार्थी तन्नाशोत्पादस्थितिषु विषादहर्षौदासीन्यस्थितिमयं जनः प्रतिपद्यत इति । निर्हेतुकत्वे तदनुपपत्तेः ॥ ५९ ॥

पुनरपि लोकोत्तरदृष्टांतेन पोषयति—

पयोव्रतो न दध्यत्ति न पयोऽत्ति दधिव्रतः ।
अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकं ॥ ६० ॥

वृत्तिः—यस्य पयो दुग्धमेवाहं भुंजे इति व्रतं नियमः, नासौ दध्यत्ति-दधि भुंक्ते । यस्य च दध्यहं भुंजे इति व्रतं नासौ पयोऽत्ति-दुग्धं भुंक्ते । यस्य चागोरसमहं भुंजे इति व्रतं नासावुभयमत्ति । कुतः गोरसरूपेण तयोरेकत्वात् । दुग्धव्रतस्य दधिरूपेणाभावात् । दधिव्रतस्य पयोरूपेणाभावात् । अगोरसव्रतस्य

दधिदुग्धरूपेणाभावात्। तस्मात्तत्त्वं वस्तु त्रयात्मकं स्थित्युत्पत्तिव्ययात्मकं सुघटमेतदनेकांते जैनमते इति स्थितम्॥ ६०॥

**अष्टसती**–लोकोत्तरदृष्टांतेनापि तत्र प्रतीतिनानात्वं विनाशोत्पादस्थितिसाधनं प्रत्याययति। दधिपयोगोरसव्रतानां क्षीरदध्युभयवर्जनात् क्षीरात्मना नश्यद्दध्यात्मनोत्पद्यमानं गोरसस्वभावेन तिष्ठतीति। तस्मात्तत्त्वं त्रयात्मकं॥ ६०॥

इति आप्तमीमांसाभाष्ये तृतीयःपरिच्छेदः।

---

**वृत्ति**–द्रव्यपर्यायरूपं तत्त्वं व्यवस्थाप्य नैयायिकवैशेषिकमतमाशंक्य दूषयितुकामः प्राह–

**कार्यकारणनानात्वं गुणगुण्यन्यताऽपि च।**
**सामान्यतद्वदन्यत्वं चैकांतेन यदीष्यते॥ ६१॥**

**वृत्तिः**–कार्यं घटादिरूपं कारणं मृत्पिण्डादिकं तयोर्नानात्वं भेद इष्यते चेत्? गुणो रूपादिर्गुणी द्रव्यं तयोरपि यद्यन्यतेष्यते सर्वथा भेद इष्यते? सामान्यं बुद्ध्यभिधानप्रवृत्तिलक्षणं तद्वत्सामान्यवत्-व्यक्तयः, तयोश्च यद्यन्यतेष्यते सर्वथैकांतेन?॥ ६१॥

तदानीं किं स्यादत आह–

**अष्टशती**–अवयवगुणसामान्यतद्वतो व्यतिरेकैकांतमाशंक्य प्रतिविधत्ते॥ ६१॥

**एकस्यानेकवृत्तिर्न भागाभावाद्बहूनि वा।**
**भागित्वाद्वाऽस्य नैकत्वं दोषो वृत्तेरनार्हते॥ ६२॥**

**वृत्तिः**–एकस्यावयव्यादेः कार्यस्य घटादेरनेकेषु स्वारंभकावयवेषु वृत्तिर्वर्तनं सा न स्यात्। कुतः? भागाभावात् निरवयवत्वात्। अवयविनो अर्थे वर्तन्ते अवयवबहुत्वं स्यादनिष्टं चैतत्। यथास्य भागाः परिकल्प्यंते, एवं सति नैकत्वमस्य भागित्वात्। तस्मादनार्हते मते वृत्तिविकल्पस्य सर्वात्मनैकदेशेन दोष एव। आर्हते पुनर्मते सर्वं युक्तमनेकांतात्॥ ६२॥

पुनरपि भेदपक्षे दूषणमाह–

**अष्टशती**–एकमनेकत्र वर्तमानं प्रत्यधिकरणं। न तावदेकदेशेन निष्प्रदेशत्वात्। नापि सर्वात्मना अवयव्यादिबहुत्वप्रसंगात्। अथापि कथंचित्प्रदेशवत्त्वं तत्रापि वृत्तिविकल्पोऽनवस्था च। तदेकत्वमेव न स्यात्। नायं प्रसंगो ऽनेकांते कथंचित्तादात्म्यात् वेद्यवेदकाकारज्ञानवत्॥ ६२॥

**देशकालविशेषेऽपि स्याद्वृत्तिर्युतसिद्धवत्।**
**समानदेशता न स्यात् मूर्तकारणकार्ययोः॥ ६३॥**

**वृत्तिः**–देशः क्षेत्रं कालः समयादिकः तयोर्विशेषो भेदस्तस्मिन्नपि तयोरवयवावयविनोर्या वृत्तिर्वर्तनं स्यात् युतसिद्धानामिव पृथग्भिन्नानामिव युतसिद्धवत् घटपटादिवत् इत्यर्थः। अन्यच्च समानदेशता न स्यात् तयोरवयवावयविनोरेकस्मिन्नवस्थानं न स्यात् मूर्तिमत्त्वात् यथा खरकरभयोः॥ ६३॥

पुनरपि भेदवादिनं प्रति दूषणमाह–

**अष्टशती**–तस्मादंगाद्यादेरत्यंतभेदाद्देशकालविशेषेणापि वृत्तिः प्रसज्येत। घटवृक्षवद्वर्णादिभिरनैकांतिकत्वमित्ययुक्तं तद् व्यतिरेकैकांतानभ्युपगमात्। अवयवावयविनोः समानदेशवृत्तिर्न भवेत् मूर्तिमत्त्वात् खरकरभवत्॥ ६३॥

आश्रयाश्रयिभावान्न स्वातंत्र्यं समवायिनां ।
इत्ययुक्तः स संबंधो न युक्तः समवायिभिः ॥ ६४ ॥

**वृत्तिः**–स्वातंत्र्यं स्वप्रधानता तेषां नास्ति। कुतः ? आश्रयाः स्वारंभकावयवा आश्रयी अवयवी कार्यादिस्तयोर्भावस्तस्मात् । यस्मात् आश्रयमंतरेण नाश्रयी वर्तते नाश्रयिणमंतरेणाश्रयः परस्परप्रतिबंधात्। तस्मान्न कालादिभेदेन वृत्तिस्तेषां समवायिनां कार्यकारणानामिति चेदत्रोत्तरमाह । सोऽयुक्तः संबंधः समवायिभिः सह न युक्तः, समवायसंबंधः परैरिष्टः कार्यकारणादिभिः सह स न घटते विचार्यमाणायोगात् । अनवस्थादिदोषादिति ॥ ६४ ॥

तदेव विघटयन्नाह—

**अष्टशती**–कार्यकारणादीनां परस्परं प्रतिबंधात् कुतः स्वातंत्र्यं यतो देशकालादिभेदेन वृत्तिः ? इति चेत् समवायस्य समवायांतरेणं वृत्तौ अनवस्थाप्रसंगात्। स्वत एव वृत्तौ द्रव्यादेस्तथापत्तेरसंबद्धः समवायः कथं द्रव्यादिभिः सह वर्तेत यतः पृथक् सिद्धिर्न स्यात् ॥ ६४ ॥

सामान्यं समवायश्चाप्येकैकत्र समाप्तितः ।
अंतरेणाश्रयं न स्यान्नाशोत्पादिषु को विधिः ॥ ६५ ॥

**वृत्तिः**–सामान्यं भिन्नेष्वभिन्नकारणं । समवाय इहेदं प्रत्ययलक्षणं । एकैकत्र एकस्मिन्नवयवे व्यक्तौ वा । समाप्तितः समाप्तेर्व्यवस्थितत्वादित्यर्थः । आश्रयमंतरेण यस्मात्तयोरवस्थानं नास्ति । एवं सति नाशोत्पादा विद्यंते येषां तेषु नाशोत्पादिषु खण्डमुण्डघटपटादिषु को विधिः कः क्रमः ? किं तु न कश्चिदपि स्यात् ॥

पुनरपि संबंधस्य दूषणमाह—

**अष्टशती**–प्रत्येकं परिसमाप्तेराश्रयाभावे सामान्यसमवाययोरसंभवादुत्पत्तिविपत्तिमत्सु कथं वृत्तिः—उत्पित्सुप्रदेशे प्राङ् नासीत नान्यतो याति, स्वयमेव पश्चाद्भवति स्वाश्रयविनाशे च नश्यति प्रत्येकं परिसमाप्तं चेति व्याहतमेतत् ॥ ६५ ॥

सर्वथाऽनभिसंबंधः सामान्यसमवाययोः ।
ताभ्यामर्थो न संबद्धस्तानि त्रीणि खपुष्पवत् ॥ ६६ ॥

**वृत्तिः**–सामान्यसमवाययोः परस्परेण सर्वथा सर्वप्रकारेणानभिसंबंधोऽसंयोगोऽतस्ताभ्यां सामान्यसमवायाभ्यां अर्थो गुणगुण्यादिर्न संबद्धो न लग्नोऽतस्तानि त्रीण्यपि सामान्यसमवायार्थरूपाणि खपुष्पसमानानि॥

सत्यमेवैतत् समवायादीनां दोषः । अस्माकं पुनः परमाणूनामेकांतेनानन्यत्वमिच्छतां न दोष इत्यत्र दूषणमाह—

**अष्टशती**–सामान्यसमवाययोः परस्परतः स्वसंबंधासंभवात् ताभ्यामर्थो न बद्धः, ततस्त्रीण्यपि नात्मानं बिभृयुः कूर्मरोमादिवत् ॥ ६६ ॥

अनन्यतैकांतेऽणूनां संघातेऽपि विभागवत् ।
असंहतत्वं स्याद्भूतचतुष्कं भ्रांतिरेव सा ॥ ६७ ॥

**वृत्तिः**–परमाणूनां द्वितीयविभागरहितानां संघातेऽपि प्रचयेऽपि असंहतत्वं पृथक्त्वं स्यात् विभागवत्, यथा घटपटयोः। नान्यताऽनन्यता सैवैकांतस्तस्मिन् परमाणूनां। अन्यथा स्वरूपेण परिणामायोगात्, एकदेशेन सर्वात्मना वा तया वृत्तिविरोधात् । सहस्राणुमात्रपिंडप्रसंगादणोः । तस्मात्[1]प्रविरलत्वं प्रविकलत्वं, अणूनां ततो धारणाकर्षणादयो न स्युः । भूतानां पृथिव्यादीनां चतुर्णां भावश्चतुष्कं सा भ्रांतिः स्यात्–भूतचतुष्टयं भ्रांतं स्यादित्यर्थः ॥

१। नानुलभ्यन्ते पाठोयं लिखितपुस्तके प्रविकलत्वस्थानयोंतरत्वेत्वानियोज्यः प्रविलत्वप्राविकलत्वयोः समानार्थत्वादिति।

सत्यमेव नैतत्प्रमाणं भावात् [ ? ] पुनरपि दूषणमाह—

**अष्टशती**—कार्यकारणादेरभेदैकांते धारणाकर्षणादयः परमाणूनां संघातेऽपि माभूवन् विभागवत् । नाहितोऽपि विशेषः तेषां विभागैकांतं निराकरोति । तत एवान्यत्रापि नेष्यते पृथिव्यादि भूतचतुष्टयस्थितिरेवं विभ्रममात्रं प्राप्नोति । इष्टत्वाददोष इति चेत् न प्रत्यक्षादिविरोधात् ॥ ६४ ॥

**कार्यभ्रांतेरणुभ्रांतिः कार्यलिंगं हि कारणं ।**
**उभयाभावतस्तत्स्थं गुणजातीतरच्च न ॥ ६८ ॥**

**वृत्तिः**—अणूनां यदेतत्कार्यं स्थूलघटपटादिकं तस्य यदि भ्रांतिर्विभ्रमस्तदानीं कार्यभ्रांतेरणूनामपि भ्रांतिः । यतः कार्यलिंगं कारणं कार्यद्वारेण कारणस्यावगमो नान्यथा, अतोऽन्यतराभावे उभयोरप्यभावोऽविनाभावनियमात् । उभयाभावाच्च तयोः स्थितं गुणो रूपादिः, जातिः सामान्यं इतरच्च क्रिया एतत्समुदितं न स्यात् । न चैतदिष्टं सर्वप्रमाणप्रसिद्धत्वात् ॥ ६६ ॥

**अष्टशती**—चक्षुरादिबुद्धौ स्थूलैकाकारः प्रतिभासमानः परमाणुभेदैकांतवादं प्रतिहंति तद्विपरीतानुपलब्धिर्वा तत्रैतत्स्यात् । भ्रांतैकत्वादिप्रतिपत्तिरिति तन्न परमाणूनां चक्षुरादिबुद्धौ स्वरूपमनर्पयतां कार्यलिंगाभावात् । तत्त्वभावाभ्युपगमानुपपत्तेस्तद्द्वयाभावात् वृत्तयो जातिगुणक्रिया न स्युः, व्योमकुसुमसौरभवत् ॥ ६८ ॥

**एकत्वेऽन्यतराभावः शेषाभावोऽविनाभुवः ।**
**द्वित्वसंख्याविरोधश्च संवृतिश्चेन्मृषैव सा ॥ ६९ ॥**

**वृत्तिः**—कार्यकारणयोरेकत्वे द्वयोर्मध्येऽन्यतराभावस्तस्य चाभावे द्वितीयस्य चाभावः । कुतः ? अविनाभावनियमात् । न ह्येकमंतरेणापरं भवति । द्वित्वमिति च या संख्या तस्याश्च विरोधोऽघटना । अथ मतं संवृत्या सर्वं युक्तं ? सा संवृतिर्मृषैव । व्यलीकैव ततो न किंचित् स्यात् बंध्यासुतपरिकल्पितरूपव्यावर्णनवत् ॥ ६९ ॥

उभयैकांतवादिनं प्रत्याह—

**अष्टशती**—आश्रयाश्रयिणोरेकत्वे तदन्यतराभावस्ततः शेषाभावस्तत्स्वभावाविनाभावित्वात् बंध्यासुतरूपसंस्थानवत् । तथा च सति द्वित्वसंख्यापि न स्यात् । तत्र संवृतिकल्पना शून्यतां नातिवर्तते परमार्थविपर्ययाद् व्यलीकवचनार्थवत् ॥ ६९ ॥

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां ।**
**अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७० ॥**

**वृत्तिः**—अन्वयव्यतिरेकाव्यतिरेकैकांतौ न यौगपद्येन संभविनौ विरोधात्-स्ववचनविरोधात् । अनभिलाप्यैकांतोऽपि न संभवति । स्याद्वादाभ्युपगमे तु न दोषः कथंचित् तथाभावोपलब्धेः ॥ ७० ॥

तथैव स्पष्टयति—

**अष्टशती**—अन्वयेतरादीनां व्यतिरेकाऽव्यतिरेकैकांतौ न वै यौगपद्येन संभविनौ विरोधात् । तथानभिलाप्यतैकांते स्ववचनविरोधः तदभिलाप्यत्वात् । स्याद्वादाभ्युपगमे तु न दोषः कथंचित्तथाभावोपलब्धेः ॥ ७० ॥

**द्रव्यपर्याययोरैक्यं तयोरव्यतिरेकतः ।**
**परिणामविशेषाच्च शक्तिमच्छक्तिभावतः ॥ ७१ ॥**

**वृत्तिः**—कारणं गुणी सामान्यं वस्तु द्रव्यमित्युच्यते, कार्यं गुणो विशेषः पर्याय इत्युच्यते, तयोरैक्यमेकत्वं कुतस्तयोरव्यतिरेकतः द्रव्यपर्याययोरव्यतिरेकोपलंभात् । एतेनास्य हेतोः प्रतिज्ञार्थैकदेशासिद्धत्वं प्रत्युक्तम् । परिणामः-कारणस्यान्यथाभावः वाग्गोचराऽतीतस्तस्य विशेषश्च तस्मात्परिणामविशेषाच्च तयोरैक्यं । शक्तयो विद्यन्ते यस्य तच्छक्तिमत्-द्रव्यं परिणामि । प्रतिनियतकार्यसम्पादनसामर्थ्यं विशेषाः शक्तयो यथा घृतादेः स्नेहतर्पणबृंहणादयः । तयोर्भावस्तस्मात् तयोरैक्यमिति वेदितव्यं ॥७१॥

कथंचिद्भेदनिरूपणार्थमाह—

**संज्ञासंख्याविशेषाच्च स्वलक्षणविशेषतः ।**
**प्रयोजनादिभेदाच्च तन्नानात्वं न सर्वथा ॥ ७२ ॥**

**वृत्तिः**—संज्ञा नाम, संख्या एकादिका, तयोर्विशेषो भेदस्तस्मात्तयोर्नानात्वं भेदः । दृश्यते च संज्ञाभेदः ऊढाऽत्र वधूः प्रमदा कामिनी क्रोधवती भामा । द्वित्वादेकत्वं संख्याभेदोऽपि प्रतीतः । स्वमसाधारणं लक्षणं स्वरूपं यस्य स चासौ विशेषस्तस्मात्तयोर्नानात्वं । तथा च द्रव्येणान्यत्प्रयोजनं पर्यायेणान्यत् वृक्षपत्रपुष्पवत् ॥

अपेक्षानपेक्षैकांतप्रतिक्षेपार्थमाह—

**अष्टसती**—यत्प्रतिभासभेदेऽपि अव्यतिरिक्तं तदेकं यथा वेद्यवेदकज्ञानं रूपादिद्रव्यं वा । तथा च द्रव्यपर्यायौ न व्यतिरिच्येते तदन्यतरापायेऽर्थस्यानुपपत्तेः । उपयोगविशेषाद्रूपादिज्ञाननिर्भासभेदः स्वविषयैकत्वं न वै निराकरोति सामग्रीभेदेऽपि युगपदेकार्थोपनिबद्धविशदेतरज्ञानवत् । तदेवं सति विरोधाद्युपलंभश्चतुरस्रधियां मनो मनागपि न प्रीणयति । वर्णादेरप्यभावप्रसंगात् एकत्वानकत्वैकांतौ नान्योऽन्यं विजयेते भावस्वभावप्रतिबंधनात् । यत्परस्परविविक्तस्वभावपरिणामसंज्ञासंख्याप्रयोजनादिकं तद्भिन्नलक्षणं, यथा भेदादि, तथा च द्रव्यपर्यायौ । विरुद्धधर्माध्यासास्खलद्बुद्धिप्रतिभासभेदाभ्यां वस्तुस्वभावभेदसिद्धेः—अन्यथा नानैकं जगत्स्यात् तदभ्युपगमप्रकारांतरासंभवात् ॥ ७१ ॥ ७२ ॥

इत्याप्तमीमांसाभाष्ये चतुर्थः परिच्छेदः

---

**यद्यापेक्षिकसिद्धिः स्यान्न द्वयं व्यवतिष्ठते ।**
**अनापेक्षिकसिद्धौ च न सामान्यविशेषता ॥ ७३ ॥**

**वृत्तिः**—अपेक्षैव प्रयोजनमेषामर्थानां सिद्धिर्निष्पत्तिर्निश्चितिर्वा । अथवाऽऽपेक्षिकी चासौ सिद्धिश्च सा यदि स्यात् । कार्यकारणादि युगपद्द्वयं न व्यवतिष्ठते न घटते । एकेनैकस्य प्रतिहतत्वात् । यदि पुनरनापेक्षिकसिद्धिस्तस्यामभ्युपगम्यमानायां सामान्यं च विशेषश्च तयोर्भावः सामान्यविशेषता सा न स्यात्-न भवेत् । तस्मात्स्वरूपेण स्वत एव सिद्धेन भवितव्यं । धर्मिधर्मभावश्च परस्परापेक्षः ॥ ७३ ॥

उभयैकांतं दर्शयन्नाह—

**अष्टशती**—कारिकाद्वयेन सामान्यविशेषात्मानमर्थं संहृत्य तत्रापेक्षानपेक्षैकांतप्रतिक्षेपायाह—

तयोरन्योन्यापेक्षैकांते स्वभावतः प्रतिष्ठितस्यैकतरस्याप्यभावेनान्यतराभावात् उभयं न प्रकल्पेत । दूरासन्नभावयोरपि स्वभावविवर्तविशेषाभावे समानदेशादेरप्यभावप्रसंगात् । तदिमौ स्वभावतः स्तां । अन्यथेतरेतराश्रयदोषानुषंगादनपेक्षापक्षेपि नान्वयव्यतिरेकौ स्यातां, भेदाभेदयोरन्योन्यापेक्षात्मकत्वात् विशेषेतरभावस्य ॥ ७३ ॥

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां।
अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७४ ॥

**वृत्तिः**-अपेक्षानपेक्षैकांतोभयं नास्ति विरोधात्। नाप्यवाच्यमवाच्यत्वेनापि वाच्यत्वात्॥ ७४ ॥

तयोरनेकांतं दर्शयन्नाह—

**अष्टशती**—अनंतरैकांतयोर्युगपद्विवक्षा माभूत् विप्रतिषेधात्, सदसदैकांतवत्। तथानभिधेयत्वैकांतेऽपीति कृतं विस्तरेण ॥ ७४ ॥

धर्मधर्म्यविनाभावः सिद्ध्यत्यन्योऽन्यवीक्षया।
न स्वरूपं स्वतो ह्येतत् कारकज्ञापकांगवत् ॥ ७५ ॥

**वृत्तिः**-क्रमभावि पिंडादिकार्यं सहभावी रूपादिर्गुणो विसदृशपरिणामलक्षणश्च विशेषो धर्मोऽत्र कथ्यते। कारणादिव्यपदेशं द्रव्यं धर्मी। स्वधर्मापेक्षया द्रव्यस्य धर्मिव्यपदेशः। स्वधर्म्यपेक्षया च रूपादेश्च धर्मव्यपदेशस्तयोर्योऽविनाभावोऽव्यभिचारोऽवश्यं सोऽन्योऽन्यापेक्षया सिद्ध्यति भासते उत्पद्यते वा। स्वरूपमसाधरणं रूपं तयोर्न परतः। कुतः? यस्मात्स्वत एव तत्सिध्यति। यथा कारकज्ञापकांगे कारकक्रियायाः अंगं ज्ञापकक्रियाया अंगं निबंधनं तयोरिव तद्वत् कर्तृकर्मकबोध्यबोधकवदित्यर्थः। अथवा अंगशब्दो विशेषार्थो द्रष्टव्यः, यथा कर्मकर्तृव्यपदेशाविनाभावो बोध्यबोधकव्यपदेशाविनाभावश्च सिध्यत्यन्योन्यापेक्षयैवमत्रापीत्यर्थः।

उपेतयत्त्वं व्यवस्थाप्योपायतत्त्वव्यवस्थापनार्थमाह—

**अष्टशती**—न केवलं सामान्यविशेषयोः स्वलक्षणमपेक्षितपरस्पराविनाभावलक्षणं स्वतःसिद्धलक्षणं, अपि तु धर्मधर्मिणोरपि, कर्मकर्तृबोध्यबोधकवत् ॥ ७५ ॥

इत्याप्तमीमांसाभाष्ये पंचमः परिच्छेदः।

---

सिद्धं चेद्धेतुतः सर्वं न प्रत्यक्षादितो गतिः।
सिद्धं चेदागमात्सर्वं विरुद्धार्थमतान्यपि ॥ ७६ ॥

**वृत्तिः**-यदि सर्वं हेतुतो निमित्तात्सिद्धमवगतं तर्हि प्रत्यक्षादितः प्रत्यक्षागमादेर्गतिरवगमो न स्यात्। दृश्यते चेंद्रियकस्याशनपानादेरर्थस्यातींद्रियस्य मलयकाश्मीरादेरत्र क्रमेण प्रत्यक्षादाप्तोपदेशतश्च गतिरिति॥ अथागमादाप्तोपदेशात्सर्वं चेष्यते ततो विरुद्धार्थानि यानि मतानि तान्यपि सिद्धिमुपगच्छेयुरिति ॥ ७६ ॥

उभयैकात्म्यैकांतं निराकर्तुमाह—

**अष्टशती**—उपेयतत्त्वं व्यवस्थाप्य-उपायतत्त्वं व्यवस्थाप्यते—

युक्त्या यन्न घटामुपैति तदहं दृष्ट्वापि न श्रद्दधे इत्यादेरेकांते तस्य बहुलं दर्शनात् प्रत्यक्षतदाभासयोरपि व्यवस्थितिः-अनुमानात् अन्यथा संकरव्यतिकरोपपत्तेः। कथंचित्साक्षात्कारणमंतरेण न क्वचिदनुमानं किं पुनः शास्त्रोपदेशः। नचैते युक्तिनिरपेक्षाः, परस्परविरुद्धार्थतत्त्वसिद्धिप्रसंगात्। न हि प्रत्यक्षानुमानाभ्यामंतरेणोपदेशं ज्योतिर्ज्ञानादिप्रतिपत्तिः ॥ ७६ ॥

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां।
अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ७७ ॥

**वृत्तिः**—उभयैकांतत्वं नास्ति विरोधात्। अवाच्यमपि न ॥ ७७ ॥

पुनरप्यनेकांतनिरूपणार्थमाह—

**अष्टशती**-युक्तानेकांतद्वयाभ्युपगमोऽपि मास्मभूत्–विरुद्धयोरेकत्र सर्वथाऽसंभवात् । तदवाच्यत्वेऽपि पूर्ववत् ॥ ७७ ॥

**वक्तर्यनाप्ते यद्धेतोः साध्यं तद्धेतुसाधितं ।**
**आप्ते वक्तरि तद्वाक्यात् साध्यमागमसाधितं ॥ ७८ ॥**

**वृत्तिः**–यो यत्राविसंवादकः स तत्राप्तः । ततः परोऽनाप्तः अनाप्ते वक्तरि तत्त्वस्योपदेष्टरि हेतोरनुमानाद्यत्साध्यं शक्याऽभिप्रेतं प्रसिद्धं तद्धेतुसाधितं-लिंगात्प्रतिपादितं । आप्ते वक्तरि वाक्याद्वचनाद्यत्साध्यं तदागमसाधितं-प्रवचनप्रतिपादितं प्रमाणभूतं प्रवचनं हि तत् । अनाप्ते पुनर्विसंवादकं तस्माद्धेतुमंतरेण न तत्सेत्स्यति ॥ ७८ ॥

अंतस्तत्त्वमेव तत्त्वमिति येषां मतं तन्निराकरणायाह—

**अष्टशती**-यो यत्राविसंवादकः स तत्राप्तः । ततः परोऽनाप्तः । तत्त्वप्रतिपादनमसंवादः तदर्थज्ञानात् । तेनातींद्रिये जैमिनिः-अन्यो वा स्तुतिमात्रावलंबी नैवाप्तः तदर्थपरिज्ञानात्ताथागतवत् । न हि तादृशातींद्रियार्थज्ञानमस्ति दोषावरणक्षयातिशयाभावात् । श्रुतेः परमार्थविस्त्वं ततः श्रुतेरविसंवादनमित्यन्योऽन्यसंश्रितं स्वतः श्रुतेर्न वै प्रामाण्यमचेतनत्वात् घटवत् । सन्निकर्षादिभिरनैकांतिकत्वमयुक्तं तत्प्रामाण्यानभ्युपगमात् । अथापि कथंचित्प्रमाणत्वं स्यात् अविसंवादित्वात् श्रुतेरयुक्तमेव । तदभावात् तेनोपचारमात्रं च न स्यात् तदर्थबुद्धिप्रामाण्यासिद्धेः । आप्तवचनं तु प्रमाणव्यपदेशभाक् तत्कारणकार्यत्वात् तदतींद्रियार्थदर्शनोपपत्तेस्तदर्थज्ञानोत्पदनाच्च । नैतत् श्रुतेः संभवति सर्वथाप्तानुक्तेः पिटकत्रयवत् । वक्तृदोषात्तादृशाप्रामाण्यं तदभावाच्छ्रुतेः प्रामाण्यमिति चेत् कुतोऽयं विभागः सिद्ध्येत् अभ्युपगमानभ्युपगमाभ्यां क्वचित्पौरुषेयत्वमन्यद्वा व्यवस्थापयतीति सुव्यवस्थितं तत्त्वं । एतेन कर्तृस्मरणाभावादयः प्रत्युक्ताः वेदेतरयोरविशेषात् । इतरत्र बौद्धो वक्तेति चेत् तत्र कमलोद्भवादिरिति कथं न समानं । सुदूरमपि गत्वा तदंगीकरणेतरमात्रे व्यवतिष्ठेत् वेदाध्ययनवदितरस्यापि सर्वदाध्ययनपूर्वाध्ययनत्वप्रक्लृप्तौ न वक्त्रं वक्रीभवति । तदतिशयांतराणां च शक्यक्रियत्वादितरत्रापि मंत्रशक्तेर्दर्शनात् सिद्धेऽपि तदनादित्वे पौरुषेयत्वाभावे वा कथमविसंवादकत्वं प्रत्येतव्यं । म्लेच्छव्यवहारादेस्तादृशो बहुलमुपलंभात् कारणदोषनिवृत्तेः कार्यदोषाभावकल्पनायां पौरुषेयस्यैव वचनस्य दोषनिवृत्तिः कर्तुर्वीतदोषस्यापि संभवात् तदध्येतृव्याख्यातृश्रोतृणां रागादिमत्त्वान्नेतरस्येति निश्शंकं नश्चेतः । वक्तृगुणापेक्षं वचनस्याविसंवादकत्वं चक्षुर्ज्ञानवत् । तद्दोषानुविधानात् ततोऽनाप्तवचनान्नर्थज्ञानमंधरूपदर्शनात् । तत्र यदेव युक्तियुक्तं तदेव प्रतिपत्तुं प्रतिपादयितुं वा शक्यं, अग्निर्हिमस्य भेषजमित्यादिवत् नाग्निहोत्रादि वाक्यसाधनं । सिद्धे पुनराप्तवचनत्वे यथा हेतुवादस्तथा आज्ञावादोऽपि प्रमाणं । ननु चापौरुषेयत्ववदाप्तशासनमप्यशक्यव्यवस्थं ? उक्तमत्र सर्वथैकांतवादानां स्याद्वादप्रतिहतत्वात् इति । तत्राप्तिः साक्षात्करणादिगुणः संप्रदायाविच्छेदो वा अन्यथांऽधपरंपरयाऽप्रतिपत्तेः ॥ ७८ ॥

इत्याप्तमीमांसाभाष्ये षष्ठः परिच्छेदः समाप्तः ॥

---

**अंतरंगार्थतैकांते बुद्धिवाक्यं मृषाऽखिलं ।**
**प्रमाणाभासमेवातस्तत्प्रमाणादृते कथं ॥ ७९ ॥**

**वृत्तिः**–अंतरभ्यंतरमगं कारणं यस्य स चासावर्थश्च तस्य भावोऽतरंगार्थता सैवैकांतो मिथ्यात्वं तस्मिन् । बुद्धिश्च बहिरर्थपरिच्छेदिका । वाक्यं चानुमाननिमित्तं परार्थं । द्वंद्वैकवद्भावः । तदखिलं निरवशेषं

मृषा मिथ्या। प्रमाणमिवावभासत इति प्रमाणाभासमेव। यद्येवं कथं मुख्यप्रमाणमंतरेण तत्प्रमाणाभासं यस्मात्सति प्रमाणे प्रमाणाभासो नान्यथा ॥ ७९ ॥

अथ मतं सर्वं बाह्याभ्यन्तरं ज्ञानमेवैतस्य मतस्य निराकरणार्थमाह—

अष्टशती-तज्जन्मकार्यप्रभवादिवेद्यवेदकलक्षणमनेकांतिकमादर्श्य संवित्तिरेव खंडशः प्रतिभासमाना व्यवहाराय कल्प्यत इत्यभिनिवेशेऽपि प्रमाणं मृग्यं। क्षणिकत्वमनन्यवेद्यत्वं नानासंतानत्वमिति स्वतस्तावन्न सिद्ध्यति भ्रांतेः। तथात्मसंवेदनेऽपि व्यवसायवैकल्ये प्रमाणांतरापेक्षयानुपलंभकल्पत्वात्। न हि तथा बुद्धयः संविदंते यथा व्यावर्ण्यंते। नापि परतः संबंधप्रतिपत्तेरयोगात् स्वांशमात्रावलंबिना मिथ्याविकल्पेन प्रकृतितत्त्वव्यवस्थापने बाहिरर्थेष्वप्यविरोधात्। कथंचिदत्र वेद्यलक्षणं यदि व्यवतिष्ठेत प्रकृतं कृतं स्यात् नान्यथा। न चानुक्तदोषं लक्षणमस्ति तत्संभवे नान्यत्र तदभावोऽभिधेयः तत्स्वपक्षपरपक्षयोः सिद्ध्यसिद्ध्यर्थं किंचित्कथंचित्कुतश्चित् आवितथं ज्ञानमादरणीयं अन्यथा शेषविभ्रमासिद्धेः। एतेन यद्ग्राह्यग्राहकाकारं तत्सर्वं भ्रांतं यथा स्वप्नेंद्रजालादिज्ञानं तथा प्रत्यक्षादिकमिति प्रतिविहितं वेदितव्यं ॥ ७९ ॥

साध्यसाधनविज्ञप्तेर्यदि विज्ञप्तिमात्रता।
न साध्यं न च हेतुश्च प्रतिज्ञाहेतुदोषतः ॥ ८० ॥

वृत्तिः-साध्यत इति साध्यं शक्यमभिप्रेतमप्रसिद्धं पक्षधर्मः। साध्यतेऽनेनेति साधनं प्रकृते नाविनाभावि तयोराकारो विज्ञप्तिर्विज्ञानं तस्या यदि विज्ञप्तिमात्रता ज्ञानमात्रत्वं। न साध्यं न च हेतुः चकारान्नापि दृष्टान्तः। कुतः? प्रतिज्ञादोषाद्धेतुदोषाच्च। निरंशत्वमभ्युपगम्य स भेदं साधयेत्? अभ्युपगमहानिः प्रतिज्ञाहेतुदोषः, अतः प्रतिज्ञादोषे हेतुदोषेऽकिंचित्कराख्यः। अथवा प्रतिज्ञैव हेतुः स दोषस्तस्मात्। यस्मान्न तदेव साध्यं साधनं निरंशत्वात्तस्य ॥ ८० ॥

अथान्तरंगार्थैकांते दोषदर्शनाद्बहिरंगार्थोऽभ्युपगम्यते तत्रापि दोषं दर्शयति—

अष्टशती-सहोपलंभनियमादभेदो नीलतद्धियोर्द्विचंद्रदर्शनवत् इत्यत्रार्थसंविदोः सहदर्शनमुपेत्यैकत्वैकांतं साधयन् कथं अवधेयाभिलापः। स्वाभिलापाभावं वा स्ववाचा प्रदर्शयन् कथं स्वस्थः। पृथगनुपलंभाद्भेदाभावमात्रं साधयेत् तच्चासिद्धं संबंधासिद्धेरभावयोः खरशृंगवत्। एतेन सहानुपलंभादभेदसाधनं प्रत्युक्तं भावाभावयोः संबंधासिद्धेः। तादात्म्यतदुत्पत्त्योरर्थस्वभावानियमात् सिद्धेऽपि प्रतिषेधैकांते विज्ञप्तिमात्रं न सिद्ध्येत् तदसाधनात्तत्सिद्धौ तदाश्रयं दूषणमनुषज्येत। तदेकोपलंभनियमोप्यसिद्धः साध्यसाधनयोरविशेषात्। एकज्ञानग्राह्यत्वं द्रव्यपर्यायपरमाणुभिरनैकांतिकं, अनन्यवेद्यत्वं असिद्धं एकक्षणवर्तिसंवित्तीनां साकल्येन सहोपलंभनियमात्, व्यभिचारिहेतुः तथोत्पत्तेरेव संवेदनत्वात्, दृष्टांतोऽपि साध्यसाधनविकलः तथोपलंभाभेदयोरर्थप्रतिनियमात् भ्रांतौ तदसंभवात्। ननु चासहानुपलंभमात्रादभेदमात्रं कथंचिदर्थस्वभावानवबोधप्रसंगात्। सर्वविज्ञानस्वलक्षणक्षणक्षयविविक्तसंततिविभ्रमस्वभावानुमितेः। साकल्येनैकत्वप्रसंगात् एकार्थसंगतदृष्टयः परचित्तविदो वा नावश्यं तद्बुद्धिं तदर्थं वा संविदंतीति हेतोरसिद्धिः सहोपलंभनियमश्च स्यान्न भेदश्च स्यात् किं प्रतिषिध्येत स्वहेतुप्रतिनियमसंभवात्। तस्मादयं मिथ्यादृष्टिः परप्रत्यायनाय शास्त्रं विदधानः परमार्थतः संविदानो वा वचनं तत्त्वज्ञानं च प्रतिरुणद्धीति न किंचिदेतत् असाधनांगवचनात् अदोषोद्भावनाच्च निग्रहार्हत्वात् ॥ ८० ॥

बहिरंगार्थतैकांते प्रमाणाभासनिह्नवात्।
सर्वेषां कार्यसिद्धिः स्याद्विरुद्धार्थाभिधायिनां ॥ ८१ ॥

वृत्तिः-बहिरंगार्थतैकांतो बाह्यार्थैकांतस्तस्मिन्नभ्युपगम्यमाने विरुद्धार्थाभिधायिनां प्रमाणांतरबाधिता-

र्थप्रकाशकानां सर्वेषां निरवशेषाणां कार्यस्य सिद्धिर्निष्पत्तिः व्यवहारसिद्धिर्भवेदित्यर्थः । कस्मात्प्रमाणाभासनिह्नवात् प्रमाणस्याभासो मिथ्यात्वं तस्य निह्नवो निराकरणं तस्मात् । एतदपि कुतः? अंतस्तत्त्वे सति वहिरर्थस्य सिद्धिरसिद्धिश्च नान्यथा ॥ ८१ ॥

उभयैकांतप्रतिक्षेपायाह—

**अष्टशती**-यत्किंचिच्चेतस्तत्सर्वं साक्षात्परंपरया वा बहिरर्थप्रतिबद्धं यथाग्निप्रत्यक्षेतरसंवेदनं । तथा स्वप्नदर्शनमपि, चेतस्तथाविषयाकारनिर्भासात् । साध्यदृष्टांतौ पूर्ववदित्यत्रापि लोकसमयप्रतिबद्धानां परस्परविरुद्धशब्दबुद्धीनां स्वार्थसंबंधः परमार्थतः प्रसज्येत ॥ ८१ ॥

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां ।**
**अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ८२ ॥**

**वृत्तिः**—पूर्ववत् ॥

भाव एव तत्त्वं नाभाव इति यस्य मतं तन्निराकरणायाह—

**अष्टशती**-अंतर्बहिर्ज्ञेयैकांतयोः सहाभ्युपगमो विरुद्धः तद्वाच्यतायां युक्तिविरोधः पूर्ववत् ॥ ८२ ॥

**भावप्रमेयापेक्षायां प्रमाणाभासनिह्नवः ।**
**बहिःप्रमेयापेक्षायां प्रमाणं तन्निभं च ते ॥ ८३ ॥**

**वृत्तिः**—भावो ज्ञानं तदेव प्रमेयं तस्य तस्मिन्वाऽपेक्षाऽभ्युपगमस्तस्यामभ्युपगम्यमानायां । प्रमाणाभासस्य निह्नवो लोपः । कुतः? ज्ञानस्य तदेतत्प्रामाण्यमप्रामाण्यं च बाह्यार्थापेक्षायां भवति नान्यथा इति ।

एतच्च मतं सर्वं वचो विवक्षामात्रसूचकमित्यस्य निराकरणायाह—

**अष्टशती**-सर्वसंवित्तेः स्वसंवेदनस्य कथंचित्प्रमाणत्वोपपत्तेः तदपेक्षायां सर्वं प्रत्यक्षं न कश्चित्प्रमाणाभासः । तथानभ्युपगमेऽन्यतम एव बुद्धेरनुमानं स्यात् । तत्रार्थज्ञानमलिंगं तदविशेषणासिद्धेर्विशेषे वा तदन्यतरेणार्थपरिसमाप्तेः किं द्वितीयेन । यच्चेदमर्थज्ञानं तच्चेदर्थस्वलक्षणं स्याद् व्यभिचारात् अहेतुः, एतेनेंद्रियादि प्रत्युक्तं । प्रत्यक्षेतरबुद्ध्यवभासस्य स्वसंवेदनात्प्रत्यक्षविरुद्धं । सुखदुःखादिबुद्धेरप्रत्यक्षत्वे हर्षविषादादयोऽपि न स्युरात्मांतरवत् । एतेन प्रतिक्षणं निरंशं संवेदनं प्रत्यक्षं प्रत्युक्तं यथाप्रतिज्ञमनुभवाभावात् । यथानुभवमनभ्युपगमात् सर्वत्र सर्वदा भ्रांतिरप्रत्यक्षत्वाविशेषात् कथंचिद्भ्रांतौ एकांतहानेर्विकल्पसंवेदनेऽपि विकल्पानतिवृत्तेः । तस्मात्स्वसंवेदनापेक्षया न किंचिद् ज्ञानं सर्वथा प्रमाणं । बहिरर्थापेक्षया तु प्रमाणतदाभासव्यवस्था तत्संवादकविसंवादकत्वात् क्वचित्स्वरूपे केशमशकादिज्ञानवत् ॥ ८३ ॥

**जीवशब्दः सबाह्यार्थः संज्ञात्वाद्धेतुशब्दवत् ।**
**मायादिभ्रांतिसंज्ञाश्च मायाद्यैः स्वैः प्रमोक्तिवत् ॥ ८४ ॥**

**वृत्तिः**—जीवस्य शब्दः संज्ञा देशामर्शकत्वाद्घटादिसंज्ञाः परिगृह्यंते । सह बाह्येनार्थेन वर्तत इति सबाह्यार्थः । कुतः? संज्ञात्वात्सनामत्वाद्धेतुशब्दवत् । शब्दस्यार्थस्त्रिधा बहिरर्थो घटाद्याकारः स्वार्थो वा । तथा चोक्तम्-स्वार्थमभिधाय काऽप्यन्यत्र वर्तत इति । यद्येवं भ्रांतिसंज्ञा यास्ताः कथं ? ता अपि स्वैरात्मस्वरूपैरर्थैर्मायाद्यैर्माया स्वप्नेन्द्रजालादिः । भ्रांतिसंज्ञाः स्वार्थवत्यः प्रमाया उक्तिर्यथा, प्रमाणशब्दः प्रमाणाभासशब्दश्च यथा स्वार्थप्रतिपादकः । अथवा सम्यक् ज्ञायतेऽनयेति संज्ञा तस्या भावः संज्ञात्वम् । तस्मादेशामर्शकत्वादन्येषामपि ग्रहणं प्रमाणतन्निबन्धनविचाराभ्यासदानफलादीनाम् । एतेषामन्यथाऽनुपपत्तेर्जीवादिशब्दः सबाह्यार्थः । अन्यथा एतेषामभावः स्यात ॥ ८४ ॥

सिद्धसाध्यतापरिहारद्वारेणामुमेवार्थं प्रकटयन्नाह—

**अष्टशती**-स्वरूपव्यतिरिक्तेन शरीरेंद्रियादिकलापेन जीवशब्दोऽर्थवान् अतो न कृतः प्रत्यक्षतः स्यात् । इति विकल्पोल्लापमात्रं लोकरूढेः समाश्रयणात् । यत्रायं व्यवहारः जीवो गतस्तिष्ठतीति वा नात्र संज्ञा, अभिप्रेतमात्रं सूचयति ततोऽर्थक्रियायां नियमायोगात्, तत्करणप्रतिपत्तीनां तदभावेनादरणीयत्वात्, साधनतदाभासयोरन्याथा विशेषासंभवात्, परंपरयापि परमार्थैकतानत्वं वाचः प्रतिपत्तव्यं । क्वचिद् व्यभिचारदर्शनादनाश्वासे चक्षुरादिबुद्धेस्तदाभासोपलब्धेः कुतो धूमादेरग्न्यादिप्रतिपत्तिः ? कार्यकारणभावस्य व्यभिचारदर्शनात् । काष्ठादिजन्मनोऽग्नेरिव मणिप्रभृतेरपि भावात् । तद्विशेषपरीक्षायामितरत्रापि विशेषाभावात् । अभिसंधिवैचित्र्यादभिधानव्यभिचारोपलंभे तदितरकारणसामग्रीशक्तिवैचित्र्यं पश्यतां कथमाश्वासः । तस्मादयमक्षलिंगसंज्ञादोषाविशेषेऽपि क्वचित्परितुष्यन्नन्यतमप्रद्वेषेण ईश्वरायते परीक्षाक्लेशलेशाऽसहत्वात् । भावोपादानसंभवे हि समाख्यानामितरेतरोपादानप्रक्लृप्तिः। भावश्चात्र हर्षविषादाद्यनेकविकारविवर्तः प्रत्यात्मवेदनीयः प्रतिशरीरं भेदाभेदात्मको प्रत्याख्यानार्हः प्रतिक्षिपंतमात्मानं प्रतिबोधयतीति कृतं प्रयासेन । न हि मायादिसमाख्याः स्वार्थरहिताः विशेषार्थप्रतिपत्तिहेतुत्वात् प्रमाणसमाख्यावत् ॥ ८४ ॥

**बुद्धिशब्दार्थसंज्ञास्तास्तिस्रो बुद्ध्यादिवाचिकाः ।**
**तुल्या बुद्ध्यादिबोधाश्च त्रयस्तत्प्रतिबिंबकाः ॥८५॥**

**वृत्तिः**-बुद्धिश्च शब्दश्चार्थश्च बुद्धिशब्दार्थास्तेषां संज्ञा बुद्धिशब्दार्थसंज्ञास्तिस्रस्त्रिसंख्याः। बुद्धिरादिर्येषां ते बुद्ध्यादयस्तेषां वाचिकाः प्रतिपादिका तुल्याः समाः। केन ? बुद्ध्याद्यर्थप्रतिपादकत्वेन। बुद्ध्यादीनां बोधाश्च ज्ञानानि च बुद्ध्याद्यर्थस्य प्रतिबिंबिका प्रतिनिधयस्त्रयस्तेऽपि तुल्या अर्थप्रतिपादकत्वेन ॥ किमुक्तं भवति-गौरिति जानीत इतीयं बुद्धेर्वाचिका संज्ञा। तस्याश्च श्रोतुः पुरुषस्य स्वार्थे बोधको बोधो भवति । गौरित्याहेतीयं शब्दस्य स्वस्यैव रूपस्य वाचिका संज्ञा। तस्याश्च श्रोतुः पुरुषस्य स्वार्थे शब्दस्य स्वस्मिन्नेव रूपे बोधको बोधो भवति । गामानय दोहार्थमितीयं संज्ञा बाह्यार्थस्य वाचिका भवति । तस्याश्च श्रोतुः स्वार्थे सास्नादिमति पिण्डे बोधको बोधो भवति । ततो बुद्ध्याद्यर्थवाचकत्वेन संज्ञास्तिस्रः समा एव बुद्ध्यादीनां शब्दार्थानां त्रयोऽपि बोधका वेदका बोधा बुद्ध्यादिशब्दार्थप्रतिभासकाश्च समा एव तत्प्रतिभासकत्वेन॥८५॥

पुनरप्याशंक्य तमेव बाह्यार्थं प्रतिपादयन्नाह—

**अष्टशती**-हेतुव्यभिचाराशंकां प्रत्यस्तमयति-तिसृणामपि स्वव्यतिरिक्तवस्तुसंबंधदर्शनात्तद्बुद्धीनां च तन्निर्भासनात्तद्विषयतोपपत्तेः ॥ ८५ ॥

**वक्तृश्रोतृप्रमातॄणां वाक्यबोधप्रमाः पृथक् ।**
**भ्रांतावेव प्रमाभ्रांतौ बाह्यार्थौ तादृशेतरौ ॥ ८६ ॥**

**वृत्तिः**-वक्ता च श्रोता च प्रमाता च वक्तृश्रोतृप्रमातारस्तेषां वक्तृश्रोतृप्रमातॄणां वाचकश्रावकज्ञापकानां। यथासंख्यं वाक्यं च बोधश्च प्रमा च वाक्यबोधप्रमाः शब्दशाब्दप्रत्यक्षानुमानानि । पृथक् व्यवस्थितलक्षणानि । भ्रांतावेव यदि भ्रांतिस्वरूपे व्यवतिष्ठेरन् न तु वर्तेरन्निति वाक्यशेषः। ततः को दोषः स्यादित्याह-प्रमाभ्रांतौ सर्वेषां प्रमाणानां बाह्यापेक्षायां द्वैविध्ये सति प्रमाणयोः प्रत्यक्षाप्रत्यक्षयोः प्रत्यक्षानुमानयोर्वा भ्रांतौ भ्रांतिस्वरूपतायां सत्यामपि। बाह्यार्थौ बाह्यविशेषौ दृश्यानुमेयाख्यौ। तादृशात्प्रस्तुताद्भ्रांतस्वरूपादितरावन्यावभ्रांतस्वरूपौ क्रमाक्रमानेकांतात्मकौ संतौ विभावनीयौ स्यातां। अथ वा प्रमाभ्रांतौ यौ भ्रांताभ्रांतौ बाह्यार्थौ भ्रांतावेव तत इदं भ्रांतमिदमभ्रांतमिति विचारोऽनर्थकः स्यात् ॥ ८६ ॥

बाह्यार्थे सति प्रमाणमप्रमाणं च युज्यते नान्यथाऽत आह—

अष्टशती-बहिरर्थाभावाद् वक्त्रादित्रयं न बुद्धेः पृथक्कृतं ततोऽसिद्धतादिदोषः साधनस्येति तत्र रूपादेर्ग्राहकस्य तद्व्यतिरिक्तविज्ञानसंतानकालस्य च स्वांशमात्रावलंबिनः प्रमाणस्य विभ्रमकल्पनायां साकल्येनासिद्धिः अंतर्ज्ञेयाभ्युपगमविरोधात्। तौ हि ग्राहकापेक्षया बाह्यार्थौ भ्रांतावेव कुतस्तत्र हेयोपादेयविवेकः ८६

बुद्धिशब्दप्रमाणत्वं बाह्यार्थे सति नासति।
सत्यानृतव्यवस्थैवं युज्यतेऽर्थाप्त्यनाप्तिषु ॥ ८७ ॥

वृत्तिः-बुद्धिश्च शब्दश्च तयोः प्रामाण्यमर्थप्रतिपादकत्वं बाह्यार्थे सति भवत्यसत्यविद्यमाने च न भवति। सत्यमवितथमनृतं वितथं तयोर्व्यवस्था अर्थस्याप्त्यनाप्तिषु ग्रहणाग्रहणेषु सत्सु युज्यते नान्यथा। वचनस्य तदा सत्यता भवति यदा बाह्यार्थं तादृग्भूतं प्रापयति। अन्यथाऽसत्वं ॥ ८७ ॥

तस्य बाह्यार्थस्य कथं प्राप्तिर्भवतीति पृष्टे कश्चिदाह दैवादेव, कश्चित्पुनः पौरुषादेवैतत्पक्षद्वयं विघटयन्नाह–

अष्टशती-स्वपरप्रतिपत्त्यर्थं साधनं बुद्धिशब्दात्मकं स्वसंवित्त्यैव परप्रतिपादनायोगात्। तस्य च सति बहिरर्थे प्रमाणत्वमर्थप्राप्तितः सिद्ध्येत्। असति प्रमाणाभासत्वं—अर्थानाप्तित इति। तदेवं परमार्थसन् बहिरर्थः साधनदूषणप्रयोगात्। अन्यथा स्वप्नेतराविशेषात् किं किं न साधितं दूषितं चेति कुतः संतानांतरमन्यद्वा। तैमिरिकद्वयाद्विचंद्रदर्शनवत् भ्रांतः सर्वो व्यवहार इत्यत्रापि तत्त्वज्ञानं शरणं। अन्यथा बहिरर्थवदभिसंहितस्यापि निराकरणापत्तेस्तथा परमाण्वादिदूषणेऽपि प्रतिपत्तव्यं-अन्यथा तत्कृतमकृतं स्यादिति सर्वत्र योज्यं। तदिमे विज्ञानसंतानाः संति न संतीति तत्त्वाप्रतिपत्तेः दृष्टापह्नुतिरनिबंधनैव अदृश्ये नात्मना कथंचिद्दृश्यानामपि परमाणूनां बहिरपि समवस्थानविप्रतिषेधाभावात् अंतर्ज्ञेयवत्। तत्र पूर्वादिदिग्भागभेदेन षडंशादिकल्पनया वृत्तिविकल्पेन वा परपक्षोपालंभे स्वपक्षाक्षेपात्, कथंचिद्विरोधपरिहारस्य पुनरायाशयतामप्यशक्तेः तत्साक्षात्परंपरया वा विमत्यधिकरणभावापन्नं ज्ञानं स्वरूपव्यतिरिक्तार्थावलंबनं ग्राह्यग्राहकाकारत्वात् संतानांतरसिद्धवत्। न हि व्यापारव्याहारनिर्भासोऽपि विप्लुतो नास्ति तदन्यत्रापि वासनाभेदो गम्यते न संतानांतरं ॥ ८७ ॥

इत्याप्तमीमांसाभाष्ये सप्तमः परिच्छेदः।

---

दैवादेवार्थसिद्धिश्चेद्दैवं पौरुषतः कथं।
दैवतश्चेदनिर्मोक्षः पौरुषं निष्फलं भवेत् ॥ ८८ ॥

वृत्तिः—अर्थस्य कार्यस्य प्रशस्ताप्रशस्तशरीरेंद्रियादेस्तथा ज्ञानसुखादेरज्ञानदुःखादेर्वा सिद्धिर्निष्पत्तिर्यदि दैवादेव सर्वथा स्यात् तद्दैवं कर्माख्यं पौरुषान्मनोवाक्कायव्यापारलक्षणाच्छुभाशुभरागादिप्रायात्पुरुषकारात्तर्हि कथं स्यात्। अथ दैवांतरादेव दैवं स्यादित्यत्रोच्यते। दैवतश्चेद्यदि दैवादेव दैवं स्यात्तदानीमनिर्मोक्षोऽसिद्धिः स्यात्। दैवस्य कारणभूतस्य कार्यभूतस्य च सततं संततितो विच्छेदं प्रत्युपायासंभवात्। तदा दानशीलप्रव्रज्यार्थः कृष्याद्यर्थश्च पुरुषकारोऽप्यनर्थः स्यात् ॥ ८८ ॥

अष्टशती-योग्यतापूर्वकर्मता वा दैवमुभयमदृष्टं, पौरुषं पुनरिह चेष्टितं दृष्टं ताभ्यामर्थसिद्धिः तदन्यतरापायेऽघटनात्। पौरुषमात्रे अर्थादर्शनात् दैवमात्रे वा समीहानर्थक्यप्रसंगात् ॥ ८८ ॥

पौरुषादेव सिद्धिश्चेत् पौरुषं दैवतः कथं।
पौरुषाच्चेदमोघं स्यात् सर्वप्राणिषु पौरुषं ॥ ८९ ॥

वृत्तिः—अथ पौरुषादेव सिद्धिश्चेत् सर्वथा यदि पौरुषमात्रादेवार्थसिद्धिः स्यात्। तत्पौरुषं दैवादेव-

प्रामाण्यात्कथमफलं स्यात् ? । तथाहि समाने हि समानानां केचिदर्थेषु युज्यंते केचिन्न प्रसिद्धमेतत् । अन्यथा दैवमंतरेण पौरुषादेव पौरुषस्य प्रवृत्तौ सत्यां सर्वप्राणिषु पौरुषममोघमेव सफलमेव स्यात् दैवहीनानामपि तद्भवति ॥ ८९ ॥

उभयैकांतेऽपि न युक्तं—

अष्टशती-ताद्धि पौरुषं विना दैवसंपदा न स्यात् तदुक्तं—

तादृशी जायते बुद्धिर्व्यवसायश्च तादृशः ।
सहायास्तादृशाः संति यादृशी भवितव्यता ॥ १ ॥

इति तत्सर्वं पौरुषापादितमिति चेत् तद्व्यभिचारदर्शिनो न वै श्रद्दधीरन् ॥ ८९ ॥

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां ।**
**अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९० ॥**

**वृत्तिः**—उभयदोषप्रसंगात् । अवाच्यत्वदोषाच्च ॥ ९० ॥

दैवात्केवलात्पौरुषाच्च केवलादर्थसिद्धिर्यदि न भवति कथं तर्हि स्यादत आह—

अष्टशती-दैवेतरयोः सहैकांताभ्युपगमे व्याघातात्, अवाच्यतायां च स्ववचनविरोधात् स्याद्वादनीतिः॥९०॥

**अबुद्धिपूर्वापेक्षायामिष्टानिष्टं स्वदैवतः ।**
**बुद्धिपूर्वव्यपेक्षायामिष्टानिष्टं स्वपौरुषात् ॥ ९१ ॥**

**वृत्तिः**—बुद्धिर्विचारः पूर्वं प्रथमं कारणं यस्याः सा तथा न बुद्धिपूर्वा अबुद्धिपूर्वा सा चासावपेक्षा च आलोचनं च सा तथा तस्यामतर्कितोपस्थितन्यायेनेत्यर्थः । इष्टमभिलषितं सुखादि अनिष्टमनभिलषितं दुःखादि । स्वदैवतः स्वपुण्यपापफलात्पूर्वजन्मनिबद्धकर्मणः । यद्यपि पौरुषमात्रं विद्यते तथापि मुख्याभावो विवक्षितो नात्यंताभावः । तथा बुद्धिपूर्वव्यपेक्षायां विचारपूर्वकत्वेनानुष्ठानादिष्टमनिष्टं च स्वपौरुषात्स्वकीयपुरुषकारात् । अत्रापि दैवमप्रधानत्वेन विवक्षितं नात्यंताभावत्वेन । परस्परापेक्षयैव कार्यसिद्धिर्यतो देव आत्मा तस्य कर्म दैवमिति ॥ ९१ ॥

ननु परदुःखे पापं तस्यैव सुखे पुण्यं स्वदुःखात्पुण्यं स्वसुखात्पापमित्येवं कश्चिदभाणि न दैवादिति तन्मतनिराकरणायाह—

**अष्टशती**—अतर्कितोपस्थितमनुकूलं प्रतिकूलं वा दैवकृतं तद्विपरीतं हि पौरुषापादितं । अपेक्षाकृतत्वात्तद्व्यवस्थायाः ॥ ९१ ॥

इत्याप्तमीमांसाभाष्ये अष्टमः परिच्छेदः ।

---

**पापं ध्रुवं परे दुःखात् पुण्यं च सुखतो यदि ।**
**अचेतनाकषायौ च बध्येयातां निमित्ततः ॥ ९२ ॥**

**वृत्तिः**—परेऽन्यस्मिन् प्राणिनि दुःखमात्राद्यदि पापं स्यात् । तस्मिन्नेव सुखमात्राच्च पुण्यं यदि स्यात् । तदानीमचेतनो विषशस्त्रादिरकषायो वीतरागः तावपि बध्येयातां कर्मबंधस्य कर्तारौ भवतः । निमित्तत्वात् । प्रत्ययमंतरेणापि भावप्रधानत्वान्निर्देशस्य ॥ ९२ ॥

तथा—

---

१ । विवक्षायामित्यपि पाठः ।

अष्टशती—परत्र सुखदुःखोत्पादनात् पुण्यपापबंधेऽति कथमचेतना न बध्येरन्? वीतरागो वा?
तन्निमित्तत्वात् ॥ ९२ ॥

पुण्यं ध्रुवं स्वतो दुःखात्पापं च सुखतो यदि ।
वीतरागो मुनिर्विद्वांस्ताभ्यां युंज्यान्निमित्ततः ॥ ९३ ॥

वृत्तिः—स्वस्मिन् दुःखात् ध्रुवं निश्चितं पुण्यं यदि स्यात्तस्मिन्नेवात्मनि सुखाद्धेतोर्ध्रुवं पापं च यदि स्यात् । ततः किं स्यात्? ताभ्यां वीतरागो मुनिर्युंज्याद्बद्धो भवेत् । कुतः? निमित्तत्वात् ॥ ९३ ॥

अथोभयैकांतस्तद्वयादिष्यते तत्रापि दोष एव विरोधात् । नाप्यवाच्यत्वं वचनविरोधात्—

अष्टशती—आत्मसुखदुःखाभ्यां पापेतरैकांतकृतांते पुनरकषायस्यापि ध्रुवमेव बंधःस्यात् ततो न कश्चिन्मोक्तुमर्हति तदुभयाभावसंभावात् ॥ ९३ ॥

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां ।
अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९४ ॥

वृत्तिः—सुगमं ॥ ९४ ॥

कथं तर्हीत आह—

अष्टशती-प्रस्तुतैकांतद्वयासिद्धांते व्याहतेःअनभिधेयतायां-अनभिधेयाभिधानविरोधात् कथं चिदेवेति युक्तं ।

विशुद्धिसंक्लेशांगं चेत् स्वपरस्थं सुखासुखं ।
पुण्यपापास्रवौ युक्तौ न चेद्व्यर्थस्तवार्हतः ॥ ९५ ॥

वृत्तिः—स्व आत्मा परोऽन्यस्तयोस्तिष्ठतीति स्वपरस्थं सुखं चासुखं च सुखासुखं जीवप्रदेशाह्लादनानाह्लादनं । विशुद्धिः प्रमोदादिशुभपरिणामः । यद्यपि निरवशेषरागादिविरहलक्षणायां विशुद्धौ विशुद्धिशब्दो वर्तते तथापि कुशलशब्दवत् शुभपरिणामादौ वर्तमानो विशुद्धिशब्दो गृह्यते । संक्लेशः—आर्तरौद्रध्याने तयोरंगं कारणं विशुद्धिसंक्लेशांगं—चेद्यदि स्वपरस्थं सुखासुखं विशुद्धिसंक्लेशालंबनं यदि भवति तदा पुण्यं च पापं च तयोरास्रवौ युक्तौ । न चेदेवं यद्येवं न स्यात् । पुण्यास्रवः पापास्रवश्च व्यर्थो निष्फलः । अर्हतो वीतरागस्य तवैव वा शुष्ककुड्यनिपतितचूर्णमुष्टिवत् बंधाभावात् । एतेन मस्करिपूरणमतं निराकृतं भवति । सिद्धेषु संक्लेशकारणाभावात् ॥ ९५ ॥

अथ पुण्यपापास्रवकारणमज्ञानमिष्यते चेत्तन्मतनिराकरणायाह—

अष्टशती—आत्मनः परस्य वा सुखदुःखयोर्विशुद्धिसंक्लेशांगयोरेव पुण्यपापास्रवहेतुत्वं नचान्यथा अतिप्रसंगात् । आर्तरौद्रध्यानपरिणामः संक्लेशः तदभावो विशुद्धिः-आत्मनः स्वात्मन्यवस्थानं ॥ ९५ ॥

इत्याप्तमीमांसाभाष्ये नवमः परिच्छेदः ।

---

अज्ञानाच्चेद्ध्रुवो बंधो ज्ञेयानंत्यान्न केवली ।
ज्ञानस्तोकाद्विमोक्षश्चेदज्ञानाद्बहुतोऽन्यथा ॥ ९६ ॥

वृत्तिः—यद्यज्ञानाज्जाड्यस्वरूपाद्बंधो ध्रुवो न केवली मुक्तः । कुतः ज्ञेयानंत्यात्प्रमेयस्यानंत्यं यतः । अथ कदाचित् ज्ञानस्तोकाद्दोषनिर्ह्रासान्मोक्षोऽभ्युपगम्यते चेद्बहुतो विपुलादज्ञानादन्यथाऽन्येन प्रकारेणा-

तिशयेन विमोक्षः स्यादिति संबंधः। अथवा प्रागुक्तान्मोक्षप्रकारादन्येन प्रकारेणापि सह जन्मनो योगः स्यात्। तथा च सति न बन्धो नापि मोक्षस्तस्य विचाराक्षमत्वात् ॥ ९६ ॥

**अष्टशती**-यदि बंधोऽयमविज्ञानात् नेदानीं कश्चिन्मुच्येत सर्वस्यैव क्वचिदज्ञानोपपत्तेर्ज्ञेयानंत्यात्। यदि पुनर्ज्ञाननिर्ह्रासाद्ब्रह्मप्राप्तिः-अज्ञानात्सुतरां प्रसज्येत। दुःखनिवृत्तेरिव सुखप्राप्तिः ॥ ९६ ॥

**विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषां।**
**अवाच्यतैकांतेऽप्युक्तिर्नावाच्यमिति युज्यते ॥ ९७ ॥**

**वृत्तिः**—उभयैकांतावक्तव्यमपि दुष्टं विरोधात् ॥

कथं तर्हि तौ स्यातामत आह—

**अष्टशती**-नहि सर्वात्मनैकस्यैकदा ज्ञानस्तोकान्मोक्षो बहुतराज्ञानाद्बंध इत्येकांतयोरविरोधः स्याद्वादन्यायविद्विषां सिद्ध्यति येन तदुभयैकात्म्यं स्यात् ॥ ९७ ॥

**अज्ञानान्मोहितो बंधो नाज्ञानाद्वीतमोहतः।**
**ज्ञानस्तोकाच्च मोक्षः स्यादमोहान्मोहितोऽन्यथा ॥ ९८ ॥**

**वृत्तिः**—ज्ञानात्पुनरपि किंविशिष्टात् मोहतो मिथ्यात्वरूपाद्बंधो भवति विनष्टमिथ्यात्वरूपादज्ञानात्पुनर्न बंधो भवति ज्ञानस्तोकादपि मोक्षः स्याद्यद्यमोहाद्भवेत् यदि पुनर्मोहितः स्यात्तस्य मोक्षाभाव एव ॥९८॥

अथ कदाचिन्मनुषे न दैवान्नापि पौरुषान्न ज्ञानान्नाप्यज्ञानात् किं तु ईश्वरप्रेरणादित्यस्य मतस्य निराकरणायाह—अथवा कामादीनां कर्मणश्च वैचित्र्यमनादित्वं च दर्शयितुमाह—

**अष्टशती**-मोहनीयकर्मप्रकृतिलक्षणादज्ञानाद् युक्तः कर्मबंधः ततोऽन्यतोऽपि बंधाभ्युपगमेऽतिप्रसंगात्। तथैव बुद्धेरपकर्षात् मोहनीयपरिक्षयलक्षणान्मोक्षमिति। विपर्ययेऽपि विपर्यासादित्यधिगंतव्यं ॥ ९८ ॥

**कामादिप्रभवश्चित्रः कर्मबंधानुरूपतः।**
**तच्च कर्म स्वहेतुभ्यो जीवास्ते शुद्ध्यशुद्धितः ॥ ९९ ॥**

**वृत्तिः**—कामादीनां रागादीनां प्रभव उत्पादः कार्यरूपश्चित्रो नानाप्रकारः। कर्मबन्धानुरूपतः ज्ञानावरणादिकर्मणः कारणाद्भवति तच्च कर्म ज्ञानावरणादिकं स्वहेतुभ्यो भवति। कुत एतत्? अनादिबंधबंधहेतुसंतानो बीजांकुरवत् न पुनरीश्वरादेस्तस्यावस्तुत्वात् विरागाक्षमत्वेन। न तर्हि केषांचिन्मुक्तिरन्येषां संसारश्च कर्मबंधनिमित्तविशेषादिति चेदाह— ते भगवतोऽर्हतो जीवा द्विप्रकाराः संसारिणः संति। कुतः शुद्ध्यशुद्धितो भव्याभव्यशक्तेः। अत एव न सर्वेषां मोक्षः। एतेनान्यदपि मतांतरं निराकृतं वेदितव्यं ॥९९॥

शुद्ध्यशुद्धिस्वरूपप्रतिपादनायाह—

**अष्टशती**-संसारोऽयं नैकस्वभावेश्वरकृतः तत्कार्यसुखदुःखादिवैचित्र्यात्। न हि कारणस्यैकरूपत्वे कार्यनानात्वं युक्तं शालिबीजवत्। अपरिणामिनः सर्वथार्थक्रियासंभवात् तल्लक्षणत्वाच्च वस्तुनः सद्भावमेव तावन्न संभावयामः। तत्र कालदेशावस्थास्वभावभिन्नानां तनुकरणभुवनादीनां किलायं कर्तेति महाचित्रं एतेनेश्वरेच्छा प्रत्युक्ता। नचैतेनास्याः संबंधः तत्कृतोपकारानपेक्षणात् ततो व्यपदेशोऽपि माभूत् अभिसंधेरनित्यत्वेऽपि समानः प्रसंगः। सकृदुत्पत्त्यादिप्रसंगाद्विचित्रत्वानुपपत्तेरिति। तयोरेकरूपत्वेऽपि कर्मवैचित्र्यात्कामादिप्रभववैचित्र्यमिति चेत्? युक्तमेतत्। किंतु नेश्वरेच्छाभ्यां किंचित्तावतार्थपरिसमाप्तेः। एतेन विरम्य प्रवृत्तिसन्निवेशविशेषादिभ्यः पृथिव्यादेर्बुद्धिमत्कारणपूर्वकत्वज्ञानेनेश्वरप्रमाणं प्रत्युक्तं। प्राकाय-

१। मोहिनः इत्यपि पाठः २। पत्रपि मोहिन इति पाठः।

करणोत्पत्तेरात्मनो धर्माधर्मयोश्च स्वयमचेतनत्वात् विचित्रोपभोगयोग्यतनुकरणादिसंपादनकौशलासंभवात्। तन्निमित्तमात्मांतरं मृत्पिंडादिकुलालवदिति चेन्न तस्यापि तितनुकरणस्य तत्कृतेतरसंभवात। तादृशोऽपि निमित्तभावे कर्मणामचेतनत्वेऽपि तन्निमित्तत्वमविप्रतिषिद्धं सर्वथा दृष्टांतव्यतिक्रमात्। स्थित्वा प्रवर्तमानार्थक्रियादिचेतनाधिष्ठानादिति नियमे पुनरीश्वरादेरपि माभूत्। नायं प्रसंगो बुद्धिमत्त्वादितिचेत् ? तत एव तर्हि प्रहीणतनुकरणादयः प्राणिनो माभूवन्। कर्मणां वैचित्र्यादिति चेत् तेषामीश्वरज्ञाननिमित्तत्वे समानः प्रसंगः। तदनिमित्तत्वे तनुकरणादेरपि तन्निमित्तत्वं माभूद्विशेषाभावात्। अर्थक्रियादेरपि ताभ्यामनैकांतिकत्वं। ततः कर्मबंधविशेषवशात् चित्राः कामादयः ततः कर्मवैचित्र्यं। नहि भावस्वभावोपलंभः करणीयः अन्यत्रापि तत्प्रसंगानिवृत्तेः। न तर्हि केषांचिन्मुक्तिरितरेषां संसारश्च। कर्मबंधनिमित्तविशेषादिति चेन्न तेषां शुद्ध्यशुद्धितः प्रतिमुक्तीतरसंभवात्-आत्मनां ॥ ९९ ॥

**शुद्ध्यशुद्धी पुनः शक्ती ते पाक्यापाक्यशक्तिवत्।**
**साद्यनादी तयोर्व्यक्ती स्वभावोऽतर्कगोचरः ॥ १०० ॥**

**वृत्तिः**—शुद्ध्यशुद्धी ये शक्ती भव्याभव्यत्वरूपे ते अनादितत्त्वार्थश्रद्धानाश्रद्धानयोग्यके कटुकेतरमुद्गपाक्यापाक्यशक्तिवत् तयोर्भव्यत्वाभव्यत्वशक्त्योर्व्यक्ती तत्त्वार्थश्रद्धानप्रियधर्मत्वादिपरिणत्यपरिणती साद्यनादी। कुतोऽयं शक्तिभेदोऽतर्कगोचरः स्वभावो यतः ॥ १०० ॥

एवं तावत्प्रमाणपरतन्त्रप्रमेयविचारः कृतः। अधुना प्रमाणत्वनिरूपणार्थमाह—

**अष्टशती**—भव्येतरस्वभावो तेषां सामर्थ्यासामर्थ्ये माषादिपाक्यापरशक्तिवत्। शक्तेः प्रादुर्भावापेक्षया सादित्वमेवमभिसंधिनानात्वं शुद्ध्यशुद्धिशक्त्योरिति भेदमाचार्यः प्राह। ततोऽन्यत्रापि साद्यनादी प्रकृतशक्त्योर्व्यक्ती। कुतः शक्तिप्रतिनियम इति चेत् ? न हि भावस्वभावाः पर्यनुयोक्तव्याः ॥ १०० ॥

**तत्त्वज्ञानं प्रमाणं ते युगपत्सर्वभासनं।**
**क्रमभावि च यज्ज्ञानं स्याद्वादनयसंस्कृतं ॥ १०१ ॥**

**वृत्तिः**-तत्त्वज्ञानं परार्थबोधः पुनरपि कथंभूतं युगपत्सर्वार्थमवभासत इति युगपत्सर्वभासनं अक्रमेण परिच्छेदात्मकमित्यर्थः तत्प्रमाणमेव। क्रमभावि च तज्ज्ञानं छद्मस्थीयं चक्षुरादिकं चकारादक्रमभावि च दीर्घशष्कुल्यादिभक्षणे संभवात्। सर्वथा सदसदेकानेकनित्यानित्यादिसकलैकांतप्रत्यनीकानेकांततत्त्वविषयः स्याद्वादो जातियुक्तिनिबंधनो वितर्को नयस्ताभ्यां संस्कृतं प्रमाणगोचरं नीतं तदपि प्रमाणं स्याद्वादनयसंस्कृतं यतस्ते तव ॥ १०१ ॥

प्रमाणफलं दर्शयन्नाह—

**अष्टशती**—बुद्धेरनेकांतात् येनाकारेण तत्त्वपरिच्छेदः तदपेक्षया प्रामाण्यं। ततः प्रत्यक्षतदाभासयोरपि प्रायशः संकीर्णा प्रामाण्येतरस्थितिरुन्नेतव्या। प्रसिद्धानुपहतेंद्रियदृष्टेरपि चंद्रार्कादिषु देशप्रत्यासत्त्याद्यभूताकारावभासनात्। तथोपहताक्षादेरपि संख्यादिविसंवादेऽपि चंद्रादिस्वभावतत्त्वोपलंभात्। तत्प्रकर्षापेक्षया व्यपदेशव्यवस्था गंधद्रव्यादिवत्। तथानुमानादेरपि कथंचिन्मिथ्याप्रतिभासेऽपि तत्त्वप्रतिपत्त्यैव प्रामाण्यं। एकांतकल्पनायां तु नांतर्बहिस्तत्त्वसंवेदनं स्वयमद्वयाद्द्वयादिप्रतिभासमानात् रूपादिस्वलक्षणानां च तथैवादर्शनात् यथा व्यावर्ण्यंते। तद्विशेषोपलंभाभ्युपगमेऽपि तद्व्यवसायवैकल्ये क्वचिद्धर्माधर्मसंवेदनवत् परीक्षत्वोपपत्तेः। विकल्पानामतत्त्वविषयत्वात् कुतस्तत्त्वप्रतिपत्तिः ? मणिप्रदीपप्रभादृष्टांतोऽपि स्वपक्षघाती मणिप्रभादर्शनस्यापि संवादकत्वेन प्रामाण्यप्राप्त्या प्रमाणांतर्भावविघटनात्। न हि प्रत्यक्षं स्वविषये विसंवादनात् शुक्तिकादर्शनवद्रजतभ्रांतौ। नापि लैंगिकं लिंगलिंगिसंबंधाप्रतिपत्तेः-अन्यथा दृष्टांतेतरयोरेकत्वात् किं केन कृतं स्यात्। कादाचित्कार्थप्राप्तेरारेकादेरपि संभवात्।

न हि मिथ्याज्ञानस्य संवादनैकांतः। तथा न लैंगिकं सर्वथैवाविसंवादकत्वात्। तस्मात्सूक्तं तत्त्वज्ञानमेव प्रमाणं। कारणस्य सामिग्रीभेदात्प्रतिभासभेदेऽपि इति। प्रमाणमेव वा तत्त्वज्ञानं। ततः स्वलक्षणदर्शनानंतरभाविनस्तत्त्वव्यवसायस्य प्रमाणतोपपत्तेः प्रत्यक्षमनुमानमिति प्रमाणे एवेत्यवधारणं प्रत्याचष्टे अनधिगतार्थधिगमाभावात, तदप्रमाणत्वे लैंगिकस्यापि माभूद्विशेषाभावात्। अनधिगतस्वलक्षणाव्यवसायात् अनुमितेरतिशयकल्पनायां प्रकृतस्यापि न वै प्रामाण्यं प्रतिषेध्यं—अनिर्णीतनिर्णयात्मकत्वात् क्षणभंगानुमानवत्। ध्वनेरखंडशः श्रवणाधिगमोऽपि प्राथमकल्पिकस्तत्त्वनिर्णीतिरेव। तदत्यये दृष्टेरपि विसंवादकत्वेन प्रामाण्यानुपपत्तेरदर्शनातिशायनात्। तद्दर्शनाभावेऽपि तत्त्वनिश्चये तदन्यसमारोपव्यच्छेदलक्षणप्रमाणलक्षणांगीकरणात। क्वचित्कुतश्चिद्धूमकेतुलैंगिकवन्निर्णीतार्थमात्रस्मृतेरधिगतार्थाधिगमात् प्रामाण्यं माभूत्। प्रमितिविशेषाभावात्, प्रकृतनिर्णयस्य प्रामाण्ये हि न किंचिदतिप्रसज्यते निर्णीतेऽपि कथंचिदतिशायनात्। प्रत्यभिज्ञानं प्रमाणं व्यवसायातिशयोपपत्तेः तत्सामर्थ्याधीनत्वात् प्रमाणत्वसिद्धेः, अन्यथा हि विसंवादः स्यात् लिंगालिंगिसबंधज्ञानं प्रमाणमनिश्चितनिश्चयादनुमानवत्। सत्त्वक्षणिकत्वयोर्धूमतत्कारणयोर्वा साकल्येन व्याप्तिप्रतिपत्तौ न प्रत्यक्षत्वमुत्सहते सन्निहितार्थानुकारित्वात् अपरीक्षाक्षमत्वाच्च। नानुमानमनवस्थानुषंगात्। सुदूरमपि गत्वा तदुभयव्यतिरिक्तं व्यवस्थानिमित्तमभ्युपगंतव्यं। उपमानादिकं प्रमाणांतरभावमिच्छतां तत्त्वनिर्णयप्रत्ययमर्शप्रतिबंधाधिगमप्रमाणत्वप्रतिषेधः प्रायशो वक्तुर्जडिमानमाविष्करोति इति प्रत्यक्षं परोक्षमित्येद्द्वितयं प्रमाणं अर्थापत्त्यादेरनुमानव्यतिरेकेऽपि परोक्षेऽतर्भावात्। तत्र सकलज्ञानावरणपरिक्षयविजृंभितं केवलज्ञानं युगपत्सर्वार्थविषयं। तथाचोक्तं 'सर्वद्रव्यपर्यायेषु केवलस्य' इति। तज्ज्ञानदर्शनयोः क्रमवृत्तौ हि सर्वज्ञत्वं कादाचित्कं स्यात्। कुतस्तत्सिद्धिरिति चेत्? सामान्यविशेषविषययोर्विगतावरणयोरयुगपत्प्रतिभासायोगात् प्रतिबंधांतराभावात्। शेषं सर्वं क्रमवृत्ति प्रकारांतरासंभवात्। चक्षुरादिज्ञानपंचकस्यापि परस्परव्यवधानेऽपि विच्छेदानुपलक्षणं क्षणक्षयवत्। यौगपद्ये हि संतानभेदात्परस्परपरामर्शाभावः संतानांतरवत्। मानसप्रत्यक्षेऽपि चक्षुरादिज्ञानानंतरप्रत्ययोद्भवेन कश्चिद्विशेषः क्रमवृत्तौ व्यवधानप्रतिभासविकल्पप्रतिपत्तेरसंभवात। यौगपद्ये हि स्पर्शादिप्रत्ययमर्शविरोधः पुरुषांतरवद्विषयस्यानेकांतात्मकत्वात्। मतिज्ञानादि स्याद्वादनयलक्षितं प्रतिपत्तव्यं ॥ १०१ ॥

**उपेक्षा फलमाद्यस्य शेषस्यादानहानधीः।**
**पूर्वं वाऽज्ञाननाशो वा सर्वस्यास्य स्वगोचरे ॥ १०२ ॥**

वृत्तिः—आद्यस्य प्रमाणस्य केवलज्ञानस्य फलमुपेक्षा रागमोहाभावः। शेषस्य प्रमाणस्य छद्मस्थीयज्ञानस्य, आदानं ग्रहणं हानं त्यागस्तयोर्धीर्बुद्धिः तत्फलं। पूर्वं वा उपेक्षा वेत्यर्थः। सामान्यापेक्षायां नपुंसकलिंगता। पूर्वा वेति पाठांतरं। वा अज्ञाननाशः फलं ज्ञानतेत्यर्थः। सर्वस्यास्य मत्यादिभेदभिन्नस्य हिताहितभेदभिन्ने स्वगोचरे स्वविषये वर्तमानस्यौत्सर्गिकं फलमज्ञाननाश इत्युक्तं ॥ १०२ ॥

प्रस्तुतस्याद्वादाद्व्यपरार्थसाधनसमर्थनार्थमाह—

अष्टशती—सिद्धप्रयोजनत्वात् केवलिनां सर्वत्रोपेक्षा। करुणावतः परदुःखजिहासोः कथमुपेक्षा तदभावे कथं वाप्तिः? इति चेत् स्वदुःखनिवर्तनवदकरुणयापि वृत्तेरन्यदुःखनिराचिकीर्षायां। दयालोरेवात्मदुःखनिवर्तनादसमाधिरिति चेत्? न वै प्रदीपः कृपालुतया आत्मानं परं वा तमसो निवर्तयति इति। कल्पयित्वापि कृपालुतां तत्करणस्य स्वभावसामर्थ्यं मृग्यं। एवं हि परंपरापरिश्रमं परिहरेत्। मत्यादेः साक्षात्फलं स्वार्थव्यामोहविच्छेदः तदभावे दर्शनस्यापि सन्निकर्षाविशेषात्। क्षणपरिणामोपलंभवदविसंवादकत्वासंभवात्। परंपरया हानोपादानसंवित्तिः। तथाहि—करणस्य क्रियायाश्च कथंचिदेकत्वं प्रदीपतमोविगमवत्। नानात्वं च परश्वादिवत्। तस्माद्ग्राह्यसंविदाकारयोः प्रमाणफलव्यवस्थायामपि विसंवादनिराक

रणे तदज्ञस्येव विषदृष्टिः प्रमाणत्वं न प्रतिपत्तुमर्हति । तावतैव प्रमाणत्वे क्षणिकत्वाद्यनुमानं-अधिगतार्थाधिगमलक्षणत्वान्न वै प्रमाणं ॥ १०२ ॥

**वाक्येष्वनेकांतद्योती गम्यं प्रति विशेषकः ।**
**स्यान्निपातोऽर्थयोगित्वात्तव केवलिनामपि ॥ १०३ ॥**

**वृत्तिः**–पदानां परस्परापेक्षाणां निरपेक्षाः समुदाया वाक्यानि तेषु वाक्येष्वनेकांतं द्योतयति प्रकटयतीति अनेकांतद्योती । स्याच्छब्दो निपातोऽव्ययं । गम्यमभिधेयमस्ति घट इत्यादिवाक्येऽस्तित्वादि तत्प्रति विशेषकः समर्थकः । अथवा गम्यं हेयादेयभेदभिन्नं वस्तु यथा यदवस्थितं तथैव तस्य विशेषकः । अर्थस्य तत्तदात्मकस्य योगित्वं घटनं तस्मादन्येषां पुनर्धर्माणां गुणीभूतत्वात् । तव भवत एतदुक्तं केवलिनां श्रुतकेवलिनां च अपिशब्दात्तच्छिष्यप्रशिष्याणां च नान्येषां तथाभूतस्य वस्तुभावात् ॥ १०३ ॥

पुनरपि तदेव समर्थयति—

**अष्टशती**–पदानां परस्परापेक्षणां निरपेक्षः समुदायो न तर्हि तदानीमिदं भवति–यथा यत्सत्तत्सर्वं परिणामि यथा घटः संश्च शब्दः, तस्मात्परिणामीत्याकांक्षणात् । प्रतिपत्तुर्धर्मोऽयं वाक्येष्वध्यारोप्यते सचेत्प्रतिपत्ता तावतार्थं प्रत्येति किमिति शेषमाकांक्षति । प्रकरणादिना वाक्यकल्पनाप्यर्थप्रतिपत्तौ न वा प्राथमकल्पिकवाक्यलक्षणपरिहारः सत्यभामादिपदवत् । सदसन्नित्यानित्यादिसर्वथैकांतप्रतिक्षेपलक्षणो नैकांतः । क्वचित्प्रयुज्यमानः स्याच्छब्दः तद्विशेषणतया प्रकृतार्थतत्त्वमनवयवेन सूचयति । प्रायशो निपातानां तत्स्वभावत्वात् एवकारादिवत् । न हि केवलज्ञानवदखिलमक्रममवगाहते वाचः क्रमवृत्तित्वात् तद्बुद्धेरपि तथाभावात् ॥ १०३ ॥

**स्याद्वादः सर्वथैकांतत्यागात्किंवृत्तचिद्विधिः ।**
**सप्तभंगनयापेक्षो हेयादेयविशेषकः ॥ १०४ ॥**

**वृत्तिः**–स्याद्वादोऽर्थप्रकरणादीनां घटादिशब्दार्थविशेषस्थापनहेतूनामनुकूलः । कुतः सर्वथैकांतत्यागात्तेषामर्थप्रकरणादीनां प्रतिकूलस्यैकांतस्य त्यागात् । अथ कथं प्रकारः स्याद्वादः किंवृत्तचिद्विधिः किमेवं वृत्तं किं निष्पन्नं वृत्तं किंवृत्तं च तच्चिच किंवृत्तचित् तदेव विधिः प्रकारो यस्य कथंचित् कुतश्चिदित्यादि । सप्तभंगाश्च ते नयाश्च तानपेक्षत इति स्यादस्ति स्यान्नास्त्यादि । हेयादेययोर्विशेषकः गुणमुख्यकल्पनया ॥ १०४ ॥

स्याद्वादकेवलज्ञानयोः कथंचित्सामान्यं दर्शयन्नाह—

**अष्टशती**–कथंचिदित्यादि किं वृत्तचिद्विधिः स्याद्वादपर्यायः सोऽयमनेकांतमभिप्रेत्य सप्तभंगनयापेक्षः स्वभावपरभावाभ्यां सदसदादिव्यवस्थां प्रतिपादयति । सप्तभंगी प्रोक्ता द्रव्यार्थिकपर्यायार्थिकप्रविभागवशान्नैगमादयः शब्दार्थनया बहुविकल्पा मूलनयद्वयशुद्ध्यशुद्धिभ्यां ॥ १०४ ॥

**स्याद्वादकेवलज्ञाने सर्वतत्त्वप्रकाशने ।**
**भेदः साक्षादसाक्षाच्च ह्यवस्त्वन्यतमं भवेत् ॥ १०५ ॥**

**वृत्तिः**—सर्वाणि च तानि तत्त्वानि च जीवाजीवादीनि तानि प्रकाशत इति सर्वतत्त्वप्रकाशने के ते ? द्वे स्याद्वादश्च केवलज्ञानं च ते द्वे प्रमाणे । तयोर्मध्येऽन्यतमं परैः परिकल्पितमवस्तु भवेद्यतः कथं तयोर्भेदः साक्षात्प्रत्यक्षादसाक्षादप्रत्यक्षात् ॥ १०५ ॥

प्रमाणं चर्चितमथ को नयो नामेत्याह—

**अष्टशती**–स्याद्वादकेवलज्ञाने इति निर्देशात् तयोरभ्यर्हितत्वान्नियमं दर्शयति परस्परहेतुकत्वादभ्यर्हिते वा पूर्वनिपातेऽव्यभिचारं सूचयति । कथं पुनः स्याद्वादः सर्वतत्त्वप्रकाशनो यावता "मतिश्रुतयोर्निबंधो

द्रव्येष्वसर्वपर्यायेषु" । जीवादयः सप्तपदार्थास्तत्त्वं तत्प्रतिपादनाविशेषात् । तथा हि भेदः साक्षादसाक्षाच्चेति साक्षात्कृतेरेव सर्वद्रव्यपर्यायान् परिछिनत्ति नान्यत इति यावत् ॥ १०५ ॥

**सधर्मणैव साध्यस्य साधर्म्यादविरोधतः ।**
**स्याद्वादप्रविभक्तार्थविशेषव्यंजको नयः ॥ १०६ ॥**

**वृत्तिः**—समानो गुणो यस्य स सधर्मा तेन सधर्मणैव एवकाराद्विपक्षनिराकरणं साध्यस्यानित्यत्वादेः शक्याभिप्रेताप्रसिद्धस्य । सधर्मणो भावः साधर्म्यं तस्मात्साधर्म्यात् । स्याद्वादः श्रुतज्ञानं तेन प्रविभक्तो विपयीकृतोऽर्थस्तस्य विशेषो नित्यत्वादिस्तद्व्यंजकः प्रकटको द्योतको नयो युक्तितोऽर्थपरिग्रहः । इत्यनेनान्वयव्यतिरेकपक्षधर्मा उक्ताः । अविरोधादित्यनेनान्यथानुपपत्त्येकलक्षणो हेतुः प्रदर्शितः । किमुक्तं भवति—अंतर्व्याप्तिमंतरेण त्रिलक्षणो हेतुर्न गमक इति । अथ को नयप्रमाणयोर्विशेषः ? अनेकांतप्रतिपत्तिः प्रमाणं, एकधर्मप्रतिपत्तिर्नयः ॥

तद्विपयस्य द्रव्यस्य स्वरूपप्रतिपादनार्थमाह—

**अष्टशती**-सपक्षेणैव साध्यस्य साधर्म्यादित्यनेन हेतोस्त्रैलक्षण्यमविरोधात् इत्यन्यथानुपपत्तिं च दर्शयता केवलस्य त्रिलक्षणस्यासाधनत्वमुक्तं तत्पुत्रत्वादिवत् । एकलक्षणस्य तु गमकत्वं "नित्यत्वैकांतपक्षेऽपि विक्रिया नोपपद्यत इति" बहुलमन्यथानुपपत्तेरेव समाश्रयणात् । यत्रार्थक्रिया न संभवति तन्न वस्तु यथा विनाशैकांतः तथा च नित्यत्वेऽपि क्रमयौपद्याभ्यामर्थक्रिया न संभवति नापरं प्रकारांतरं—इति त्रिलक्षणयोगेऽपि प्रधानमेकलक्षणं तत्रैव साधनसामर्थ्यपरिनिष्ठितेः । तदेव प्रतिबंधः पूर्ववद्वीतसंयोग्यादिसकलहेतुप्रतिष्ठापकं । ततः स्याद्वादेत्यादिनानुमितमनेकांतात्मकमर्थतत्त्वमादर्शयति । तस्य विशेषो नित्यत्वादिः पृथक् पृथक्त्वस्य प्रतिपादको नयः । तथा चोक्तं—

अर्थस्यानेकरूपस्य धीः प्रमाणं तदंशधीः
नयः धर्मांतरापेक्षी दुर्णयस्तन्निराकृतिः ॥ १ ।

तदनेकांतप्रतिपत्तिः प्रमाणं । एकधर्मप्रतिपत्तिर्नयः । तत्प्रत्यनीकप्रतिक्षेपो दुर्णयः केवलं विपक्षविरोधदर्शनेन स्वपक्षाभिनिवेशनात् ॥ १०६ ॥

**नयोपनयैकांतानां त्रिकालानां समुच्चयः ।**
**अविभ्राट् भावसंबंधो द्रव्यमेकमनेकधा ॥ १०७ ॥**

**वृत्तिः**—नया नैगमादयः सप्त उपनयास्तद्भेदोपभेदार्थपर्यायास्त एवैकांताः प्रधानधर्मास्तद्ग्राह्यत्वात्तद्व्यपदेशः । त्रयः काला विपयो येषां ते तथाभूतास्तेषां समुच्चय एकस्मिन्नवस्थानम् । अविभ्राट् अपृथक् भावसंबंधः सत्तासंबंधो यस्य स तथाभूतस्तद्द्रव्यमेकमभेदापेक्षया पुनरनेकप्रकारं ॥ १०७ ॥

तदर्थं चोद्य परिहारायाह—

**अष्टशती**-उक्तलक्षणो द्रव्यपर्यायस्थानः संग्रहादिर्नयः । तच्छाखाप्रशाखात्मोपनयः । तदेकांतातात्मनां विपक्षापेक्षालक्षणानां त्रिकाललक्षणानां त्रिकालविषयाणां समितिर्द्रव्यं । ततस्तेषामपोद्धारात् गुणगुण्यादिवत् ॥ १०७ ॥

**मिथ्यासमूहो मिथ्या चेन्न मिथ्यैकांतताऽस्ति नः ।**
**निरपेक्षा नया मिथ्या सापेक्षा वस्तु तेऽर्थकृत् ॥ १०८ ॥**

**वृत्तिः**—नित्यानित्यास्तित्वादीनां मिथ्याधर्माणां योऽयं समूहः समुदायः स मिथ्याऽसत्यरूप इति चेदेवं भवतोऽभिप्रायः । मिथ्येत्येकांतः संग्रहस्तस्य भावो मिथ्यैकांतता सा नोऽस्माकं नास्ति न विद्यते ।

कुतः? यतो निरपेक्षा नयाः मिथ्या परस्परमपेक्षा अटना तस्या निर्गताः पृथग्भूता धर्मा व्यलीकाः। सापेक्षाः परस्परसंबद्धास्ते नया वस्तु परमार्थतत्त्वं यतोऽर्थकृत् क्रमाक्रमाभ्यामर्थकारित्वादतो न चोद्यस्यावतारः।

पुनरपि तमर्थं समर्थयन्नाह—

अष्टशती-सुनयदुर्णययोर्यथास्माभिर्लक्षणं व्याख्यातं तथा न प्रचोद्यं न परिहारः। तथाहि-निरपेक्षत्वं प्रत्यनीकधर्मस्य निराकृतिः। सापेक्षत्वमुपेक्षा अन्यथा प्रमाणनयाविशेषप्रसंगात्। धर्मांतरादानोपेक्षाहानि-लक्षणत्वात् प्रमाणनयदुर्णयानां प्रकारांतरासंभवाच्च। तदतत्स्वभावप्रतिपत्तेस्तत्प्रतिपत्तिरन्यनिराकृतिश्चेति विश्वोपसंहृतिः॥ १०८॥

**नियम्यतेऽर्थो वाक्येन विधिना वारणेन वा।**
**तथाऽन्यथा च सोऽवश्यमविशेष्यत्वमन्यथा॥ १०९॥**

वृत्तिः-वाक्येन, अस्ति घटो नास्ति चेति विधिप्रतिषेधरूपेणार्थो नियम्यते नियंत्र्यते विशेषविषयं नीयते तस्मात्सोऽर्थस्तथा च तदतदात्मक इत्यभ्युपगंतव्यः। यदि पुनरन्यथान्येन प्रकारेणैकांतरूपेणाभ्युपगम्यते तदानीमविशेष्यत्वमवस्तुत्वं स्यादेकधर्माक्रांतत्वेन वस्त्वस्ति यतः।

वाक् द्विविषया न भवतीत्यस्य निराकरणायाह—

अष्टशती—यत्सत् तत्सर्वमनेकांतात्मकं वस्तुतत्त्वं सर्वथा तदर्थक्रियाकारित्वात्। स्वविषयाकारसंवित्तिवत्। न किंचिदेकांतं वस्तुतत्त्वं सर्वथा तदर्थक्रियासंभवात् गगनकुसुमादिवत्। नास्ति सदेकांतः सर्वव्यापारविरोधप्रसंगात् असदेकांतवदिति विधिना प्रतिषेधेन वा वस्तुतत्त्वं नियम्यते। अन्यथा तद्विशिष्टमर्थतत्त्वं न स्यात् इत्यनेन विधिप्रतिषेधयोर्गुणप्रधानभावेन सदसदादिवाक्येषु वृत्तिरिति लक्षयति॥ १०९॥

**तदतद्वस्तु वागेषा तदेवेत्यनुशासति।**
**न सत्या स्यान्मृषावाक्यैः कथं तत्त्वार्थदेशना॥ ११०॥**

वृत्तिः—एषा वागेतद्वचनं सर्वाभ्युपगतं तच्चातच्च तदतत् अस्तित्वनास्तित्वात्मकं वस्तुतत्त्वं तदेव तादृग्भूतमेव नैकांतात्मकमेवेत्येवमनुशासति कथयति प्रतिपादयति। यदि न सत्या सद्भूता स्याद्भवेत्। एवं सति मृषा वाक्यानि असत्यरूपाणि वाक्यानि स्युः। तथा सति तत्त्वार्थस्य परमार्थस्य प्रमाणहेतुफलप्रतिपादकस्य येयं देशना कथनं परप्रतिपादनं कथं स्यात्? किं तु न भवेदेव। तथा च विशीर्णं प्रमाणादिलक्षणं वर्त्म। तस्माद्यत्सत्तदनेकांतात्मकं हेतुज्ञानं प्रमाणवदिति वचनस्य प्रमाण्यमेषितव्यं॥ ११०॥

पुनरपि वचोलक्षणमाह—

अष्टशती—प्रत्यक्षादिप्रमाणविषयभूतं विरुद्धधर्माध्यासलक्षणं वाऽविरुद्धं वस्तु। तदेवेत्येकांतेन प्रतिपादयंती मिथ्यैव भारती कथमनयार्थदेशनं? इत्येकांतवाक्यार्थानुपपत्तिरालक्ष्यते॥ ११०॥

**वाक्स्वभावोऽन्यवागर्थप्रतिषेधनिरंकुशः।**
**आह च स्वार्थसामान्यं तादृग्वाच्यं खपुष्पवत्॥ १११॥**

वृत्तिः—वाचः स्वभाव आत्मीयं रूपमन्येषां वाच्यत्वेनाभिप्रेततराणां वाग्वचनं तस्या अर्थस्तस्य प्रतिषेधो निराकरणं तस्मिन् निरंकुशः समर्थो घटशब्दः पटादीनां निराकरणं करोति स्वार्थं च प्रतिपादयति अतोऽनेकांतः, यदि पुनः सर्वथा स्वस्य ज्ञानार्थस्य बाह्यार्थस्य सामान्यं परापररूपमपोहं चार्वाक आह आचष्ट इत्यभ्युपगमः स्यात् तादृग्वाच्यं विशेषरहितं सामान्यं खपुष्पवत् गगनकुसुमसमानमतो न किंचित्स्यात्॥१११॥

ननु सामान्यमेव वाचोऽर्थो यदुत विशेषे वर्तते सामान्येऽर्थक्रियाभावादिति संसर्गबोधमतं तन्निराकरणार्थमाह—

अष्टशती—वाचः स्वभावोऽयं येन स्वार्थसामान्यं प्रतिपादयंती तदपरं निराकरोति । अन्यतरापायेऽनुक्तानतिशायनात् । इदं तदानेयं तथावान् प्रतीयेत तदर्थः । कूर्मरोमादिवत् नच सामान्यं विशेषपरिहारेण क्वचिदुपलभामहे। अनुपलभमानाश्च कथं स्वात्मानं परं वा तथाभिनिवेशेन विप्रलभामहे? ॥१११॥

सामान्यवाग्विशेषे चेन्न शब्दार्थो मृषा हि सा।
अभिप्रेतविशेषाप्तेः स्यात्कारः सत्यलांछनः ॥ ११२ ॥

वृत्तिः—सामान्यसंबंधिनी वाक् विशेषे वर्तते—विशेषमाचष्टे तत्त्वार्थक्रियाभावात् चेदेवं भवतोऽभिप्रायः? तर्हि शब्दस्यार्थोऽभिधेयः कुतः? तादृग्भूता वाक् मृषा व्यलीका सा। यस्मान्न ह्यन्यस्य वाचकोऽन्यमाह। घटशब्दः पटार्थस्य न कदाचिदपि प्रतिपादकः। नाप्यपोहोऽस्यार्थः, अपोहो हि परव्यावृत्तिः सा च तुच्छा ततो भेदक्षणिकैकांतपक्षे न वाच्यं नापि वाचको नानुमानं नाप्यागमः सर्वाभावोऽतः स्यात्कारः स्याद्वादः सत्यलांछनः सत्यभूतोऽभिप्रेतविशेषस्याप्तेर्निमित्तमिष्टार्थप्राप्तिहेतोराश्रयणीयः सर्वदोषकलंकातीतत्वात् ।

तस्यैव स्वरूपमाह—

अष्टशती।—अस्तीति केवलमभावव्यवच्छेदादपोहमाहेति चेत्? कः पुनरपोहः? परतो व्यावृत्तिरभावः। कथमेवं सत्यभावं प्रतिपादयति भावं न प्रतिपादयतीत्येवमनुक्तसमं न स्यात्। तद्विकल्पो मिथ्याभिनिवेशवशादिति चेन्न चैतत्तस्य प्रतिपादकं मिथ्याविकल्पहेतुत्वाद् व्यलीकवचनवत्। ततः स्याद्वाद एव सत्यलांछनो न वादांतरमित्यनुशाययति ॥ ११२ ॥

विधेयमीप्सितार्थांगं प्रतिषेध्याविरोधि यत्।
तथैवादेयहेयत्वमिति स्याद्वादसंस्थितिः ॥ ११३ ॥

वृत्तिः—विधेयमस्तीत्यादि प्रतिषेध्यस्य नास्तित्वादेरविरोधेनाविरुद्धं यत्तदीप्सितार्थस्याभिप्रेतकार्यस्यांगं कारणं। तथैवादेयं वस्तु हेयात्याज्यादविरुद्धं। इत्यनेन प्रकारेण स्याद्वादस्य संस्थितिः सर्वप्रमाणैरविरुद्धा सिद्धिरिति प्रमाणहेतुदृष्टांताभासाः परवादिपरिकल्पितप्रमाणहेतुदृष्टांता वेदितव्याः। कुतः? तल्लक्षणाभावात्। वस्त्वपि तैर्यत्परिकल्पितं तदपि नास्ति लक्षणाभावात्। तस्माद्यदनेकांतात्मकं तत्सत्यं लक्षणयोगादिति।

शास्त्रार्थोपसंहारकारिकामाह—

अष्टशती—अस्तीत्यादि विधेयमभिप्रेत्य विधानात् नास्तित्वादिभिरविरुद्धं विधिप्रतिषेधयोरन्योन्याविनाभावलक्षणत्वात् स्वार्थज्ञानवत्। तद्विधेयप्रतिषेध्यात्मविशेषात् स्याद्वादः प्रक्रियते सप्तभंगीसमाश्रयात् ॥ ११३ ॥

इतीयमाप्तमीमांसा विहिता हितमिच्छता।
सम्यङ्मिथ्योपदेशार्थविशेषप्रतिपत्तये ॥ ११४ ॥

वृत्तिः—इत्यनेन प्रकारेणेयं प्रत्यक्षतश्च योऽयमुपदेशस्तस्यार्थः स्वरूपं तस्य विशेषो याथात्म्यं तस्य प्रतिपत्तिरवगमस्तस्यै सम्यगुपदेशोऽयं मिथ्येति सर्वज्ञेन ज्ञायते यस्मात्।

कृतकृत्यो निर्व्यूढतत्त्वप्रतिज्ञ आचार्यः श्रीमत्समंतभद्रकेसरी प्रमाणनयतीक्ष्णनखरदंष्ट्राविदारितप्रवादिकुनयमदविह्वलकुंभिकुंभस्थलपाटनपटुरिदमाह—

**अष्टशती**—इति स्वोक्तपरिच्छेदविहितेयमाप्तमीमांसा सर्वज्ञविशेषपरीक्षानिःश्रेयसकामिनां । अभव्यानां तदनुपयोगात् । तत्वेतरपरीक्षां प्रति भव्यानामेव हि नियताधिकृतिः ॥ ११४ ॥

श्रीवर्द्धमानमकलंकमनिंद्यवंद्य—
पादारविंदयुगलं प्रणिपत्य मूर्ध्ना
भव्यैकलोकनयनं परिपालयंतं—
स्याद्वादवर्त्म परिणौमि समंतभद्रं ॥ १ ॥

**इत्यष्टशती समाप्ता ।**

---

**जयति जगति क्लेशावेशप्रपंचहिमांशुमान्**
**विहतविषमैकांतध्वांतप्रमाणनयांशुमान् ।**
**यतिपतिरजो यस्याधृष्टान्मतांबुनिधेर्लवान्**
**स्वमतमतयस्तीर्थ्या नाना परे समुपासते ॥ ११५ ॥**

**वृत्तिः**—यस्य भट्टारकस्य मतांबुधेरागमोदधेर्लवान् कणान् अधृष्टानखरीकृतान् परे नाना तीर्थ्याः प्रवादिनः सुगतादयः स्वमते मतिर्येषां ते स्वमतमतयः कृतात्मबुद्धयः समुपासते सेवंते सोऽजो जातिजरामरणरहितो यतिपतिः प्रधानस्वामी जयति त्रैलोक्यस्वामित्वं करोति बाह्याभ्यंतरशत्रून् निहत्य जयति लोके । पुनरपि किंविशिष्टः ? क्लेशस्य दुःखस्य आवेशः कदर्थना तस्य प्रपंचो विस्तारः स एव हिमं प्रालेयः तस्यांशुमानादित्यः । एकांत एव ध्वांतं तमः विषमं च तदेकांतध्वांतं च विषमैकांतध्वांतं प्रमाणं च नयाश्च प्रमाणनया उक्तलक्षणा विहतं निराकृतं विषमैकांतध्वांतं यैस्ते तथाभूतास्ते च ते प्रमाणनयाश्च त एवांशवः किरणास्ते विद्यंते यस्य स तथाभूत इति यतिपतेर्विशेषणं ॥ ॥ ११५ ॥

श्रीमत्समंतभद्राचार्यस्य त्रिभुवनलब्धजयपताकस्य प्रमाणनयचक्षुषः स्याद्वादशरीरस्य देवागमाख्याकृतेः संक्षेपभूतं विवरणं कृतं श्रुतविस्मरणशीलेन वसुनंदिना जडमतिनाऽऽत्मोपकाराय ।

समंतभद्रदेवाय परमार्थविकल्पिने ।
समंतभद्रदेवाय नमोऽस्तु परमात्मने ॥ १ ॥

सुखाय जायते लोके वसुनंदिसमागमः ।
तस्मात् निषेव्यतां भव्यैर्वसुनंदिसमागमः ॥ २ ॥

---

**इति श्रीवसुनंद्याचार्यकृता देवागमवृत्तिः समाप्ताः ।**




---

१ नैतत्पद्यस्याष्टशत्युपलब्धा ।



## सनातनजैनग्रंथमाला

१

स्याद्वादपतिश्रीविद्यानंदस्वामिविरचिता–

# प्रमाणपरीक्षा।



जयंति निर्जिताशेषसर्वथैकांतनीतयः ।
सत्यवाक्याधिपाः शश्वद्विद्यानंदा जिनेश्वराः ॥ १ ॥

अथ प्रमाण-परीक्षा—तत्र प्रमाणलक्षणं परीक्ष्यते:—

'सम्यग्ज्ञानं प्रमाणं प्रमाणत्वान्यथानुपपत्तेः। सन्निकर्षादिरज्ञानमपि प्रमाणं स्वार्थप्रमितौ साधकतमत्वात् ? इति नाशंकनीयं। तस्य स्वप्रमितौ साधकतमत्वासंभावात्। न ह्यचेतनोऽर्थः स्वप्रमितौ करणं पटादिवत्। सोऽर्थप्रमितौ करणमित्यप्यनालोचितवचनं नैयायिकानां स्वप्रमितावसाधकतमस्यार्थप्रमितौ साधकतमत्वानुपपत्तेः। तथाहि— न सन्निकर्षादिरर्थप्रमितौ साधकतमः स्वप्रमितावसाधकतमत्वात्पटवत्। प्रदीपादिभिर्व्यभिचारः साधनस्य ? इति न मंतव्यं। तेषामर्थपरिच्छित्तावकरणत्वात्। तत्र नयनमनसोरेव करणतया स्वयमभिमतत्वात्। प्रदीपादीनां तत्सहकारितयोपचारतः करणव्यवहारानुसरणात्। न चोपचारतोऽर्थप्रकाशन एव प्रदीपादिः करणं न पुनः स्वप्रकाशन इति मन्यमानो निर्मलमना मनीषिभिः अनुगम्यते। नयनादेः-अर्थसंवेदनमिव प्रदीपादिसंवेदनमप्युपजनयतः प्रदीपादीनां सहकारित्वाविशेषात्। तेषामर्थप्रकाशनवत् स्वप्रकाशनेऽपि करणतोपचारव्यवस्थितेः। नयनादिना-अनेकांत इत्यपि न मननीयं तस्याप्युपकरणरूपस्याचेतनस्वभावस्यार्थप्रतिपत्तौ करणतोपचारात्। परमार्थतो भावेंद्रियस्यैव-अर्थग्रहणशक्तिलक्षणस्य साधकतमतया करणताध्यवसनात्। न चैतदसिद्धं विशुद्धधिषणजनमनसि युक्तियुक्ततया परिवर्तमानत्वात्। तथाहि—

'यदसन्निधाने कारकांतरसन्निधानेऽपि यन्नोपपद्यते तत् तत्करणकं। यथा कुठारासन्निधाने काष्ठछेदनमनुत्पद्यमानं कुठारकरणकं। नोत्पद्यते च भावेंद्रियासमवधानेऽर्थसंवेदनमुपकरणसद्भावेऽपि, इति तद्भावेंद्रियकरणकं। बहिःकरणसन्निकर्षाधीनतायां हि पदार्थसंवेदनस्य, नयनसन्निकर्षात् कलश इव नभसि नायनसंवेदनोदयः कुतो न भवेत् ?। न हि नयननभसोरन्यतरकर्मजः संयोगो न विद्यते एवेति वक्तुं युक्तं सकलमूर्तिमद्द्रव्यसंयोगान्नभसि सर्वगतत्वसाधनविरोधात्। न च नयनममूर्तिमदेव ? तस्य परैर्भौतिकतयोपगतत्वात्। पौद्गलिकतयास्माभिरुपकरणस्याभिमतत्वात्। ननु नभसि नयनसन्निकर्षस्य योग्यताविरहान्न संवेदननिमित्तता ? इत्यपि न साधीयः तद्योग्यताया एव साधकतमत्वानुषंगात्। का चेयं सन्निकर्षस्य योग्यता नाम ? विशिष्टा शक्तिरिति चेत् ? सा तर्हि सहकारिसन्निधिलक्षणा अनुमंतव्या।

'**सहकारिसांनिध्यं शक्तिः**' इत्युद्योतकरवचनात् । सहकारिकारणं च द्रव्यं गुणः कर्मादि वा स्यात्? न तावदात्मद्रव्यं सहकारि तत्सन्निधानस्य नयननभःसन्निकर्षेऽपि समानत्वात्। एतेन कालद्रव्यं दिग्द्रव्यं च सहकारि निराकृतं तत्सान्निध्यस्यापि सर्वसाधरणत्वात्। मनोद्रव्यं सहकारि इत्यपि न संगतं तत्सन्निधेरपि समानत्वात्। कदाचित्तद्गतमनसः पुरुषस्याक्षार्थसन्निकर्षस्य संभवात्। एतेन आत्मा मनसा युज्यते, मन इंद्रियेण, इंद्रियमर्थेनेति चतुष्टयसन्निकर्षोऽर्थप्रमितौ साधकतम इति सामिग्रीप्रमाणवादो दूषितः–तत्सामिग्र्याश्च नभसि सद्भावात् । कालादिनिमित्तकारणसामिग्रीवत् । यदि पुनस्तेजोद्रव्यं सहकारि तत्सन्निधानात् चाक्षुषादिज्ञानप्रभवादिति मतं तदापि न विशेषः घटादाविव गगनेऽपि लोचनसन्निकर्षस्यालोकसन्निधिप्रसिद्धेः संवेदनानुषंगस्य दुर्निवारत्वात् । अथादृष्टविशेषो गुणः सहकारी तत्सान्निध्यं संयुक्तसमवायेन, चक्षुषा संयुक्ते पुरुषे त्वदृष्टविशेषस्य समवायात् इति मन्यध्वं तर्हि कदाचिन्नभसि नायनंसवेदनोदयः कुतो न भवेत्?। सर्वदा सर्वस्य तत्रादृष्टविशेषस्य सहकारिणोऽसन्निधानात् इति चेत्? कथमेवमीश्वरस्य नभसि चक्षुषा ज्ञानं श्रोत्रादिभिरिव घटते? समाधिविशेषोपजनितधर्मविशेषानुगृहीतेन मनसा गगनाद्यशेषपदार्थसंवेदनोदये तु महेश्वरस्य बहिःकरणमनर्थकतामियात्। फलासंभवात्। बहिःकरणरहितस्य च नांतःकरणमुपपद्येत परनिर्वृत्तात्मवत् । ततः कथमंतःकरणेन धर्मादिग्रहणं मनसोऽसंभवे च न समाधिविशेषस्तदुपजनितधर्मविशेषो वा घटामन्वाव्येते तस्यात्मांतःकरणसंयोगनिबंधनात्।

स्यान्मतं शिशिररश्मिशेखरस्य समाधिविशेषसंततिर्धर्मविशेषसंततिश्च सर्वार्थज्ञानसंततिहेतुरनाद्यपर्यवसाना, सततमेनोमलैरस्पृष्टत्वात्। तस्य संसारिसादिमुक्तिविलक्षणत्वात् सर्वथा मुक्ततयैव प्रसिद्धत्वात् इति तदप्यसमीचीनं एवमीश्वरस्यापि एनोमलविलयादेरेवार्थसंवेदनोद्भवप्रसक्तेः । सततमेनोमलाभावो हि यथा सततमर्थज्ञानसंतानहेतुरुररीक्रियते तथा कादाचित्कैनोमलाभावः कदाचिदर्थप्रमितिनिमित्तयुक्तमुत्पश्यामः तस्यैव सन्निकर्षसहकारितोपपत्तेः। तत्सान्निध्यस्यैव च सन्निकर्षशक्तिरूपत्वसिद्धेः। तद्भावादेव च नयनसन्निकर्षेऽपि नभसि संवेदनानुत्पत्तिघटनात् । तत्र विशिष्टधर्मोऽपि न पापमलापायादपरः प्रतिपद्यते भावांतरस्वभावत्वादभावस्य, निःस्वभावस्य सकलप्रमाणगोचरातिक्रांतत्वेन व्यवस्थापयितुमशक्यत्वात् इति पुरुषगुणविशेषसद्भाव एव पापमलाभावो विभाव्यते। स चात्मविशुद्धिविशेषो ज्ञानावरणवीर्यांतरायक्षयोपशमभेदः स्वार्थप्रमितौ शक्तिर्योग्यतेति च स्याद्वादवेदिभिरभिधीयते। प्रमातुरुपलब्धिलक्षणप्राप्तापि नातोर्थांतरभावमनुभवति पुंसः संवेदनावरणवीर्यांतरायलक्षणपापमलापगमविरहे क्वचिदुपलब्धिलक्षणप्राप्ततानुपलब्धेः, नयनोन्मीलनादिकर्मणो दृश्यादृश्ययोः साधारणत्वात् प्रद्योतादिकरणसाकल्यवत् । एतेन नयनोन्मीलनादिकर्मसन्निकर्षसहकारिविषयगतं चोपलभ्यत्वसामान्यमिति प्रत्याख्यातं तत्सन्निधाने सत्यपि क्वाचित्कस्यचित् प्रमित्यनुपपत्तेः कालाकाशादिवत् । न हि तत्रोपलभ्यत्वसामान्यमसंभाव्यं योगिनोऽप्यनुपलब्धिप्रसंगात्। अस्मादृशापेक्षयोपलभ्यत्वसामान्यमन्यदेव योगीश्वरापेक्षादुपलभ्यतासामान्यादितिचेत्? तत्किमन्यत्? अन्यत्र योग्यताविशेषात्। प्रतिपुरुषं भेदमास्तिघ्नुवानादिति(?) स एव प्रमातुः प्रमित्युपजनने साधकतमोऽनुमंतव्यः सन्निकर्षादौ सत्यपि क्वचित्संविदुपजननाभावविभावनात्। स च योग्यताविशेषः स्वार्थग्रहणशक्तिः। आत्मनो भावकरणं ज्ञानमेव फलरूपत्वात् स्वार्थज्ञानात्कथंचिदभिन्नत्वात् सर्वथापि ततो भेदे नात्मस्वभावत्वोपपत्तेः। न चैवमुपगंतुं युक्तं? आत्मन एवोभयनिमित्तवशात्तथापरिणामात्। आत्मनो हि जानात्यनेनेति करणसाधनात भेदोपवर्णनं कथं चिदभिन्नकर्तृकस्य करणस्य प्रसिद्धेः अग्निरौष्ण्येन दहतींधनमिति यथा। स्वातंत्र्यविवक्षायां तु जानातीति ज्ञानमात्मैव, कर्तृसाधनत्वात्तदात्मज्ञानयोरभेदप्राधान्यात् आत्मन एव स्वार्थग्रहणपरिणाममापन्नस्य ज्ञानव्यपदेशसिद्धेः औष्ण्यपरिणाममापन्नस्याग्नेरौष्ण्यव्यपदेशवत्। तेन ज्ञानात्मा ज्ञानात्मना ज्ञेयं जानाति इति व्यवहारस्य प्रतीतिसिद्धत्वात्। यथा च

ज्ञानात्मैव प्रमाता स्यात्, अज्ञानात्मनः खादेः प्रमातृत्वायोगात् तथा ज्ञानात्मैव प्रमाणं स्वार्थप्रमितौ ज्ञानक्रियात्मिकायां करणत्वात् । अज्ञानात्मनस्तत्र साधकतमत्वाघटनान्नाज्ञानं प्रमाणं, अन्यत्रोपचारतः । ततोनाज्ञानेन इंद्रियसन्निकर्षलिंगशब्दादिना साधनस्य व्यभिचारः । नापि व्यतिरेकासिद्धिः सम्यग्ज्ञानत्वस्य साध्यस्य निवृत्तौ प्रमाणत्वस्य साधनस्य पटादौ विनिवृत्तिविनिश्चयात् । केवलव्यतिरेकिणोऽपि साधनस्य समर्थनात् । ततः सूक्तं सम्यग्ज्ञानमेव प्रमाणमज्ञानस्य प्रमाणत्वायोगान्मिथ्याज्ञानवदिति ।

किं पुनः सम्यग्ज्ञानं ? अभिधीयते–स्वार्थव्यवसायात्मकं सम्यग्ज्ञानं सम्यग्ज्ञानत्वात् । यत्तु न स्वार्थव्यवसायात्मकं तन्न सम्यग्ज्ञानं यथा संशयविपर्यासानध्यवसायाः । सम्यग्ज्ञानं च विवादापन्नं तस्मात्स्वार्थव्यवसायात्मकमिति सुनिश्चितान्यथानुपपत्तिनियमनिश्चयलक्षणो हेतुः प्रसिद्ध एव सम्यगवबोधादीनां साध्यधर्मिणि सद्भावात् । स्वसंवेदनेंद्रियमनोयोगिप्रत्यक्षैः सम्यग्ज्ञानैः–अव्यवसायात्मकैर्व्यभिचारी हेतुः ? इति स्वमनोरथमात्रं सौगतस्य तेषां सम्यग्ज्ञानत्वविरोधात् । सम्यग्ज्ञानत्वं ह्यविसंवादकत्वेन व्याप्तं तदभावे तदसंभवात् । तदपि प्रवर्तकत्वेन व्याप्तं तदभावे तदसंभवात् । तदप्यर्थप्रापकत्वेन अर्थप्रापकस्याविसंवादित्वात् । निर्विषयज्ञानवत् । तदपि प्रवर्तकत्वेन व्याप्तं अप्रवर्तकस्यार्थाप्रत्यायकत्वात् । तद्वत् प्रवर्तकत्वमपि विश्वविषयोपदर्शकत्वेन व्याप्तं स्वविषयमुपदर्शयतः प्रवर्तकव्यवहारविषयत्वसिद्धेः । न हि पुरुषं हस्ते गृहीत्वा ज्ञानं प्रवर्तयति । स्वविषयं रूपं दर्शयत् प्रवर्तकमुच्यते अर्थप्रापकं च इत्यविसंवादकं सम्यग्वेदकं प्रमाणं तद्विपरीतस्य मिथ्याज्ञानत्वप्रसिद्धेः संशयवदिति धर्मोत्तरमतं । तत्राव्यवसायात्मकस्य चतुर्विधस्यापि समक्षस्य सम्यग्वेदनत्वं न व्यवतिष्ठते तस्य स्वविषयोपदर्शकत्वाऽसिद्धेः । तत्सिद्धौ वा नीलादाविव क्षणक्षयादावपि तदुपदर्शकत्वप्रसक्तेः । ततो यदव्यवसायात्मकं ज्ञानं न तत्स्वविषयोपदर्शकं यथा गच्छतः तृणस्पर्शसंवेदनं । अध्यवसायि प्रसिद्धमव्यवसायात्मकं च सौगताभिमतदर्शनमिति व्यापकानुपलब्धिः सिद्धा । व्यवसायात्मकस्य व्यापकस्याभावे तद्व्याप्यत्वस्य स्वविषयोपदर्शकत्वस्याननुभवात् ।

स्यादाकूतं— तेन व्यवसायात्मकत्वेन स्वविषयोपदर्शकत्वस्य व्याप्तिः सिद्धिमधिवसति तस्य व्यवसायजनकत्वेन व्याप्तत्वात् । नीलधवलादौ व्यवसायजननाद्दर्शनस्य तदुपदर्शकत्वव्यवस्थितेः । क्षणक्षयस्वर्गप्रापणशक्त्यादौ व्यवसायाजनकत्वात् तदनुपदर्शकत्वव्यवस्थानात् । गच्छत्तृणस्पर्शसंवेदनस्यापि तत एव स्वविषयोपदर्शकत्वाभावसिद्धेः मिथ्याज्ञानत्वव्यवहारात् अन्यथानध्यवसायित्वाघटनात् इति ? तदेतदविचारितरमणीयं ताथागतस्य व्यवसायो हि दर्शजन्यः । स किं दर्शनविषयस्योपदर्शकोऽनुपदर्शको वा ? इति विचार्यते– यद्युपदर्शकस्तदा स एव तत्र प्रवर्तकः प्रापकश्च स्यात् संवादकत्वात् सम्यक्संवेदनवत् । न तु तन्निमित्तं दर्शनं सन्निकर्षादिवत् । अथानुपदर्शकः ? कथं दर्शनं तज्जननात् स्वविषयोपदर्शकं ? अतिप्रसंगात् । संशयविपर्यासकारणस्यापि स्वविषयोपदर्शकत्वापत्तेः । दर्शनविषयसामान्याध्यवसायित्वाद्विकल्पतज्जनकं दर्शनं स्वविषयोपदर्शकमिति च न चेतसि स्थापनीयं दर्शनविषयसामान्यस्यान्यापोहलक्षणस्यावस्तुत्वात् । तद्विषयव्यवसायजनकस्य वस्तूपदर्शकत्वविरोधात् । दृश्यसामान्ययोरेकत्वाध्यवसायाद्वस्तूपदर्शक एव व्यवसाय इत्यपि मिथ्या तयोरेकत्वाध्यवसायासंभवात् । तदेकत्वं हि दर्शनमध्यवस्यति तत्पृष्ठजो व्यवसायो वा ज्ञानांतरं वा ? न तावद्दर्शनं तस्य विकल्पाविषयत्वात् । नापि तत्पृष्ठजो व्यवसायः तस्य दृश्यागोचरत्वात् । तदुभयविषयं ज्ञानांतरं तु निर्विकल्पकं विकल्पात्मकं वा ? न तावन्निर्विकल्पकं तस्य दृश्य विकल्प्यद्वयविषयत्वविरोधात् । नापि विकल्पात्मकं तत एव । नच तद्द्वयाविषयं संवेदनं तदुभयैकत्वमध्यवसातुं समर्थं । तथाहि– यद्यन्न विषयी कुरुते न तत्तदेकत्वमध्यवस्यति यथा रससंवेदनं स्पर्शरूपोभयं । न *विषयी कुरुते च दृश्यविकल्प्योभयं किंचित्संवेदनं, इति न कुतश्चिद्दृश्यविकल्प्ययोरेकत्वाध्यवसायः सिद्ध्येत्* ततो न व्यवसायो वस्तूपदर्शकः स्यात् । नापि तदुपजननाद्दर्शनं स्वविषयवस्तूपदर्शकं योगिप्रत्यक्षस्य विधूतकल्पनाजालस्य सर्वदा वस्तुविकल्पाजनकत्वात् तदुपदर्शकत्वविरोधात् । स्वसंवेदनमपि न तस्य स्वरूपोप-

दर्शकं तद्विकल्पानुत्पादकत्वात् इति कुतः स्वरूपस्य स्वतो गतिरवतिष्ठेत ? । किं च दर्शनपृष्ठभाविनो विकल्पस्य स्वसंवेदनबलात्सिद्धौ तत्स्वसंवेदनं कुतः प्रमाणं स्यात् ? । तद्यदि स्वरूपोपदर्शनादेव प्रमाणमास्थीयते ? तदा स्वर्गप्रापणशक्त्यादावपि प्रमाणतामास्कंदेत् । तत् स्वसंविदाकार एव प्रमाणं तद्व्यवसाय जननात्-न पुनरन्यत्रेति परिकल्पनायां तद्व्यवसायस्वसंवेदनस्यापि व्यवसायांतरोपजननात् स्वरूपोपदर्शेनेन भवितव्यमित्यनवस्थानात्, नाद्यव्यवसायस्वसंवेदनस्य प्रामाण्यं । तदप्रामाण्ये च न तत एव व्यवसायसिद्धिः । तदसिद्धौ च न तज्जननाद्दर्शनस्य स्वविषयोपदर्शकत्वं । तदभावे च न तस्य प्रवर्तकत्वं । अप्रवर्तकस्य नार्थप्राप्तिनिमित्तत्वं । तदसंभवे च नाविसंवादकत्वं तद्विरहे च न सम्यग्ज्ञानत्वं स्वसंवेदनेंद्रियमनोयोगिज्ञानानामिति न तैर्व्यभिचारः साधनस्य संभवति ।

स्यान्मतं—अर्थसामर्थ्यादुत्पत्तिः—अर्थसारूप्यं च दर्शनस्य स्वविषयोपदर्शकत्वं तच्च सकलसमक्षवेदनानामव्यवसायात्मकत्वेऽपि संभवत्प्रवर्तकत्वमर्थप्रापकत्वमविसंवादकत्वं सम्यग्ज्ञानलक्षणमिति तैः समीचीनैर्ज्ञानैर्व्यभिचार एव हेतोरिति ? तदपि दुर्घटमेव क्षणक्षयादावपि तदुपदेशकत्वप्रसंगात् । तत्राक्षणिकत्वादिसमारोपानुप्रवेशादयोगिनः प्रतिपत्तुर्नोपदेशकत्वमवतिष्ठते । योगिनस्तु समारोपासंभवात् क्षणक्षयादावपि दर्शनं तदुपदेशकमेवेति समाधानमपि न धीमद्धृतिकरं नीलादावप्ययोगिनस्तद्विपरीतसमारोपप्रसक्तेः । कथमन्यथा विरुद्धधर्माध्यासात्तद्दर्शनभेदो न भवेत् ? न हि—अभिन्नमेकदर्शनं क्वचित्समारोपाक्रांतं क्वचिन्नेति वक्तुं युक्तं । ततो यद्यत्र विपरीतसमारोपविरुद्धं तत्तत्र निश्चायात्मकं यथानुमेयेऽर्थेऽनुमानज्ञानं । विपरीतसमारोपविरुद्धं च नीलादौ दर्शनमिति व्यवसायात्मकमेव बुद्ध्यामहे । निश्चयहेतुत्वाद्दर्शनं नीलादौ विपरीतसमारोपविरुद्धं न पुनर्निश्चयात्मकत्वात् ततोऽन्यथानुपपत्तिः साधनस्यानिश्चितेति मामंस्थाः योगिप्रत्यक्षेऽस्य विपरीतसमारोपस्य प्रसंगात् तेन तस्याविरोधात् । परेषां तु तस्यापि निश्चयात्मकत्वात्तेन विरोधः सिद्ध एव । तथा निश्चयहेतुना दर्शनेन विरुद्धं प्रतिपादयतः स्वमतविरोधः स्यात् । निश्चयारोपमनसोर्बाध्यबाधकभाव इति धर्मकीर्तेरभिमतत्वात् दर्शनारोपयोर्विरोधाभावासिद्धेः । ननु चार्थदर्शनस्य निश्चयात्मकत्वे साध्ये प्रत्यक्षविरोधः संहृतसकलविकल्पदशायां रूपादिदर्शनस्यानिश्चयात्मकस्यानुभवात् । तदुक्तं—

संहृत्य सर्वतश्चिंतां स्तिमितेनांतरात्मना ।
स्थितोऽपि चक्षुषा रूपमीक्षते साक्षजा मतिः ॥ १ ॥ इति ।

तथानुमानविरोधोऽपि व्युच्छित्तचिंतावस्थायां—इंद्रियादर्थगतौ कल्पनानुपलब्धेः । तत्र कल्पनासद्भावे पुनस्तत्स्मृतिप्रसंगः तदा विकल्पितकल्पनावत्—तदप्युक्तं—

पुनर्विकल्पयन् किंचिदासीन्मे कल्पनेदृशी ।
इति वेत्ति न पूर्वोक्तावस्थायामिंद्रियाद्गतौ ॥ १ ॥—इति

तदेतदपि धर्मकीर्तेरपरीक्षिताभिधानं प्रत्यक्षतो निर्विकल्पदर्शनाप्रसिद्धत्वात् । संहृतसकलविकल्पावस्था ह्यश्वं विकल्पयतो गोदर्शनावस्था । न च तदा गोदर्शनमव्यवसायात्मकं पुनः स्मरणाभावप्रसंगात् । तस्य संस्कारकारणत्वविरोधात् क्षणिकत्वादिवत् । व्यवसायात्मन एव दर्शनात् । संस्कारस्य स्मरणस्य च संभवात् अन्यतस्तदनुपपत्तेः । तदुक्तं—

व्यवसायात्मनो दृष्टेः संस्कारः स्मृतिरेव वा ।
दृष्टे दृष्टसजातीये नान्यथा क्षणिकादिवत् ॥ १ ॥

अथ मतं—अभ्यासप्रकरणबुद्धिपाटवार्थित्वेभ्यो निर्विकल्पकादपि दर्शनान्नीलादौ संस्कारः स्मरणं चोत्पद्यते न पुनः क्षणिकादौ तदभावात् । व्यवसायात्मनोऽपि प्रत्यक्षात्तत एव संस्कारस्मरणोपपत्तेः । ने निश्चितेऽपि वस्तुनि नियमेन संस्कारादेरभावात् तेषां व्यवसायात्मकसमक्षवादिनोऽपि नियमतो-

ऽभ्युपगमनीयत्वात् इति ? तदपि फल्गुप्रायं भूयोदर्शनलक्षणस्याभ्यासस्य क्षणक्षयादौ सुतरां सद्भावात्। पुनपुनर्विकल्पोत्पादरूपस्य चाभ्यासस्य परं प्रत्यसिद्धत्वात् तत्रैव विवदात्। क्षणिकाक्षणिकविचारणायां क्षणिकप्रकरणस्यापि भावात्। बुद्धिपाटवं तु नीलादौ क्षणक्षयादौ च समानं तद्दर्शनस्यानंशत्वात्। तत्र पाटवापाटवयोर्भेदे तद्बुद्धेरपि भेदापत्तेः, विरुद्धधर्माध्यासात्। तथाविधतद्वासनाख्यकर्मत्रशाद्बुद्धेः पटवापाटवे स्यातां, इत्यप्यनेनापास्तं तत्कर्मसद्भावयोरपि विरुद्धधर्मयोरनंशबुद्धावेकस्यामसंभवात्। यत्पुनरर्थित्वं जिज्ञासितत्वं तत्क्षणिकवादिनः क्षणिकत्वेऽस्त्येव नीलादिवत्। यत्पुनरभिलषितृत्वमर्थित्वं तन्न व्यवसायजनननिबंधनं क्वचिदनभिलषितेऽपि वस्तुनि कस्य चिदुदासीनस्य स्मरणप्रतीतेः—इति नाभ्यासादिभ्यः क्वचिदेव संस्कारजननं—अनंशज्ञानज्ञेयवादिनो घटते। परस्य तु बहिरंतरनेकात्मकतत्त्ववादिनो न किंचिदनुपपन्नं सर्वथैकत्र व्यवसायाव्यवसाययोः, अवायानवायाख्ययोः, संस्कारासंस्कारयोः, धारणेतराभिधानयोः, स्मरणास्मरणयोश्चानभ्युपगमात्। तद्भेदात्कथंचिद्बोधबोध्ययोर्भेदप्रसिद्धेः।

सौगतस्यापि व्यावृत्तिभेदाद्भेदोपगमाददोषोयं तथाहि—नीलत्वमनीलत्वव्यावृत्तिः, क्षणिकत्वमक्षणिकत्वव्यावृत्तिरुच्यते तत्रानीलव्यावृत्तौ नीलव्यवसायस्तद्वासनाप्रबोधादुत्पन्नो न पुनरक्षणिकव्यावृत्तौ क्षणिकव्यवसायस्तत्र तद्वासनाप्रबोधाभावात्। न चानयोर्व्यावृत्त्योरभेदः संभवति व्यावर्त्यमानयोरभेदप्रसंगात्। न च तद्भेदाद्वस्तुनो भेदः तस्य निरंशत्वात् अन्यथा अनवस्थाप्रसंगात् इति परे मन्यंते तेपि न सत्यवादिनः स्वभावभेदाभावे वस्तुनो व्यावृत्तिभेदासंभवात्। नीलस्वलक्षणं हि येन स्वभावेनानीलाद्व्यावृत्तं तेनैव यद्यक्षणिकाद्व्यावर्तेत तदा नीलाक्षणिकयोरेकत्वापत्तेस्तद्व्यावृत्त्योरेकत्वप्रसंगः। स्वभावांतरेण तत्ततो व्यावृत्तमिति वचने तु सिद्धः स्वलक्षस्य स्वभावभेदः कथं निराक्रियते ?। यदि पुनः स्वभावभेदोऽपि वस्तुनो तत्स्वभावव्यावृत्त्या कल्पित एवेति मतं ? तदा परिकल्पितस्वभावांतरकल्पनायामनवस्थानुषज्येत। तथाहि—अनीलस्वभावान्यव्यावृत्तिरपि स्वभावांतरेण अन्यव्यावृत्तिरूपेण वक्तव्या। सापि तदन्यव्यावृत्तिस्वभावांतरेण तथाविधेनेति न क्वचिद् व्यवतिष्ठते।

कश्चिदाह—तत एव सकलविकल्पवाग्गोचरातीतं वस्तु विकल्पशब्दानां विषयस्यान्यव्यावृत्तिरूपस्य अनाद्यविद्योपकल्पितस्य सर्वथा विचाराऽसहत्वात्। विचारसहत्वे वा तदवस्तुत्वविरोधात् इति सोपि न सम्यग्वादी दर्शनविषयस्याप्यवस्तुत्वप्रसंगात् तस्यापि शब्दविकल्पविषयवत् विचारासहत्वाविरोधात्। तथाहि—नीलस्वलक्षणं सुगतेतरजनदर्शनविषयतामुपगच्छत् किमेकेन स्वभावेन नानास्वभावेन वा दृश्यं स्यात् ? तद्यद्येकेन स्वभावेन तदा यदेव सुगतदृश्यत्वं तदेवेतरजनदृश्यत्वमित्यायातं अशेषस्य जगतः सुगतत्वं। यद्वेतरजनदृश्यत्वं तदेव सुगतदृश्यत्वमिति सकलस्य सुगतस्येतरजनत्वापत्तेः सुगतरहितमखिलं स्यात्। अथैतस्माद्दोषाद्बिभ्यता नानास्वभावेन सुगतेतरजनदृश्यत्वं प्रतिपाद्यते तदा नीलस्वलक्षणस्य दृश्यस्वभावभेदः कथमपह्नुयेत ? न च दृश्यं रूपमनेकं कल्पितमिति शक्यं वक्तुं दृश्यस्य कल्पितत्वविरोधात्। अथ मन्येथाः स्वलक्षणस्य दृश्यत्वं स्वाकारार्पकत्वव्यावृत्तिरूपं नानाद्रष्ट्रपेक्षयाऽनेकं घटामटत्येव तदभावे नानाद्रष्टृदर्शनविषयतां स्वलक्षणं नास्कंदेत्। न च परमार्थतो दर्शनं दृश्यविषयं सर्वज्ञानां स्वरूपमात्रपर्यवसितत्वात्। उपचारादेव बहिर्विषयताव्यवहारात् इति तदप्यसत् वस्तुनः स्वाकारार्पकत्वस्यापि पूर्वपर्यनुयोगानतिक्रमात्। तद्धि स्वलक्षणं येन स्वभावेन सुगतदर्शनाय स्वाकारमर्पयति तेनैवेतरजनदर्शनाय स्वभावांतरेण वा ? यदि तेनैव तदा तदेव सुगतेतरजनदर्शनैकत्वमापनीपद्यते तथा च सर्वस्य सुगतत्वं इतरजनत्वं वा दुर्निवारतामाचनीस्कंद्यते। स्वभावांतरेण स्वाकारार्पकत्वे स एव वास्तवः स्वभावभेदः स्वलक्षणस्याक्षुण्णतया कथं प्रतिक्षिप्यते ?। यत्पुनः स्वाकारार्पकत्वमपि न वस्तुनः परमार्थपथप्रस्थायि समवस्थाप्यते स्वरूपमात्रविषयत्वात् सकलसंवेदनानामिति मतं तदपि

दुरुपपादमेव तेषां वैयर्थ्यप्रसंगात्। ज्ञानं हि ज्ञेयप्रसिद्ध्यर्थं प्रेक्षावतामन्विष्यते प्रकाश्यप्रसिद्ध्यर्थं प्रदीपादिवत्। न पुनः स्वरूपप्रसिद्ध्यर्थं प्रदीपवदेवेति। बहिरर्थाविषयत्वे सकलसंवेदनानां कथमिव वैयर्थ्यं न स्यात्? निर्विषयस्वप्नादिसंवेदनानामपि सार्थकत्वप्रसंगात् स्वरूपप्रकाशनस्य प्रयोजनस्य सर्वत्र भावात्। किं च सुगतसंवेदनस्यापि स्वरूपमात्रपर्यवसितायां कथमिव सुगतः सर्वदर्शीष्यते पृथग्जनवत्। पृथग्जनो वा कथं न सर्वदर्शी सुगतवदनुमन्येत? स्वरूपमात्रपर्यवसितायाः तत्संवेदनेऽपि सद्भावात्। यदि पुनर्वास्तवत्वं सकलवेदित्वं ताथागतस्योरीक्रियते संवृत्त्या तस्य व्यवहारिभिः संव्यवहरणात् तदव्यहरणे तद्वचनस्य सत्यताव्यवहारानुपपत्तेः सकलज्ञानरहितपुरुषोपदेशाद्विप्रलंभनशंकनप्रसंगात्। तदुक्तं—

ज्ञानवान् मृग्यते कश्चित्तदुक्तप्रतिपत्तये।
अज्ञोपदेशकरणे विप्रलंभनशंकिभिः ॥ १ ॥ इति

प्रतिपद्येत तथापि सुगतेतरव्यवहारसिद्धिः· सुगतवदितरजनस्यापि संवृत्या सकलवेदित्वकल्पनानुषंगात्। सकलपदार्थेभ्यः सुगतस्य संवेदनोदयात् सकलार्थज्ञता युक्ता कल्पयितुं न पुनरितरजनस्य प्रतिनियतपदार्थादेव तद्वेदनोत्पत्तेरिति चेत्? न सुगतज्ञानस्यापि सकलपदार्थजन्यत्वासिद्धेः। समसमयवर्तिपदार्थजन्यत्वासंभवात्। यदि पुनरनाद्यतीतपदार्थेभ्यो भविष्यदनंतार्थेभ्यः सांप्रतिकार्थेभ्यश्च सकलेभ्यः सुगतसंवेदनस्योत्पत्तिः अखिलाविद्यातृष्णाविनाशादुपपद्यत एव अस्मदादिसंवेदनाद्विशिष्टत्वात्तस्येति मतं? तदा किमेकेन स्वभावेन कालत्रयवर्तिपदार्थैः सुगतविज्ञानमुत्पद्यते नानास्वभावैर्वा? यद्येकेन स्वभावेन, एकेनार्थेन सुगतज्ञानमुपजन्यते तेनैव सकलपदार्थैः तदा सकलपदार्थानामेकरूपतापत्तिः। सुगतविज्ञानस्य वा तदेकपदार्थजन्यत्वसिद्धिरिति नेतरजनसंवेदनात्तस्य विशेषः सिद्ध्येत्। अथान्येन स्वभावेनैकार्थः सुगतज्ञानमुपजनयति पदार्थांतराणि तु स्वभावांतरैस्तदुपजनयंति इति मतिर्भवतां तर्हि सुगतज्ञानमनंतस्वभावमेकमायातं। तद्वत्सकलं वस्तु कथमनंतात्मकतां न स्वीकुर्यादिति चिंतनीयं। एकस्यानेकस्वभावत्वविरोधान्नैकमनेकात्मकमिति चेत्? कथमिदानीं सुगतविज्ञानमेकपदार्थजन्यं नानारूपतां बिभर्ति?। यदि पुनरतज्जन्यरूपव्यावृत्त्या तज्जन्यरूपपरिकल्पनान्न तत्त्वतः सुगतसंवेदनमनेकरूपताक्रांतमित्याकूतं? तदा न परमार्थतः शुद्धोदनितनयविज्ञानमखिलपदार्थजन्यं, इति कुतः पृथग्जनसंवेदनादस्य विशेषः समवतिष्ठते?। ततः सुगतविज्ञानदृश्यतामितरजनविज्ञानविषयतां च एकस्य नीलादिस्वलक्षणस्यानेकाकारामपि स्वयमुररीकुर्वता नीलस्वलक्षणकादिरूपतापि दृश्यादृश्यस्वलक्षणा स्वीकर्तव्या, तथा च नीलादौ दर्शनमन्यद्व्यवसायात्मकं संस्कारस्मरणकारणं तद्विपरीदर्शनादवबोद्धव्यं, इति न प्रत्यक्षप्रसिद्धं निर्व्यवसायात्मकत्वमध्यक्षज्ञानस्य। नाप्यनुमानप्रसिद्धं गोदर्शनसमयेऽश्वकल्पनावत् गोदर्शनस्यापि व्यवसायात्मकत्वोपपत्तेः। पुनर्विकल्पयतः तदनुस्मरणस्यान्यथानुपपत्तेः। तथा हि यन्निर्व्यवसायात्मकं ज्ञानं तन्नोत्तरकालमनुस्मरणजननसमर्थं यथा पराभिमतं स्वर्गप्रापणशक्त्यादिदर्शनं तथा चाश्वविकल्पकाले गोदर्शनमिति तदनुस्मरणजननसमर्थं न स्यात् भवति च पुनर्विकल्पयतस्तदनुस्मरणं तस्माद्व्यवसायात्मकमिति निश्चयः। तदेवं व्यवसायात्मकत्वे साध्ये सम्यग्ज्ञानं साधनं न व्यभिचरति कस्य चिदपि सम्यग्ज्ञानस्याव्यवसायात्मकत्वप्रमाणबाधितत्वादिति स्थितं।

ये त्वाहुः—स्वार्थव्यवसायात्मकत्वे साध्ये सम्यग्ज्ञानस्य हेतोर्न प्रयोजकत्वं सर्वस्य सम्यग्ज्ञानस्यार्थव्यवसायमंतरेणैव सम्यग्ज्ञानत्वसिद्धेः। तथा हि—विवादाध्यासितं सम्यग्ज्ञानं नार्थव्यवसायात्मकं ज्ञानत्वात्, स्वव्यवसायात्मकत्वात्। यद्ज्ञानं स्वव्यवसायात्मकं वा तन्नार्थव्यवसायात्मकं यथा स्वमादिज्ञानं तथा च विपदावन्नं ज्ञानं जिनपतिमतानुसारिभिः, अभ्युपगतं तस्मान्नार्थव्यवसायात्मकमिति तेपि न प्रातीति-

कवादिनः जागृद्दशाभाविनः समीचीनविज्ञानस्यार्थव्यवसायात्मकत्वप्रतीतेः। तस्यार्थाव्यवसायात्मकत्वे-सतोऽर्थे प्रवृत्त्यभावप्रसंगात्। प्रतीयते च सम्यग्ज्ञानादर्थे प्रवृत्तिरविसंवादिनी तस्मादर्थव्यवसायात्मकं तदर्थे प्रवृत्त्यन्यथानुपपत्तेः। मिथ्याज्ञानादप्यर्थे प्रवृत्तिदर्शनादनेकांतः ? इति चेन्न तस्याः प्रवृत्त्याभासत्वात्, व्यवसितार्थप्राप्तिनिमित्तत्वाभावात्। व्यवसितमर्थं प्रापयितुं समर्था हि सम्यक् प्रवृत्तिः सा च मिथ्याज्ञानान्नोपपद्यत इति न व्यभिचारः। यच्चार्थव्यवसायात्मकत्वनिराकरणप्रवणमनुमानं तत्स्वार्थं व्यवस्यति वा न वा ? प्रथमविकल्पे तेनैवानैकांतिकं साधनमापद्येत तस्य ज्ञानत्वे स्वव्यवसायात्मकत्वेऽपि स्वसाध्यार्थव्यवसायात्मकत्वसिद्धेः। द्वितीयविकल्पेऽपि नातोऽनुमानादिष्टसिद्धिः स्वसाध्यार्थव्यवसायात्मकत्वात् अनुमानाभासवत्। ततः किं बहुना सर्वस्य किंचिदिष्टं साधयतः स्वयमनिष्टं वा दूषयतः कुतश्चित्प्रमाणात् तस्यार्थव्यवसायात्मकत्वाभ्यनुज्ञानमवश्यंभावि तस्यार्थाव्यवसायात्मकत्वे स्वेष्टानिष्टसाधनदूषणानुपपत्तेः। परप्रसिद्ध्यार्थव्यवसायिनः प्रमाणस्याभ्यनुज्ञानाददोष इति चेत् ? तर्हि परं प्रतिपाद्यसे वा न वा ? यदि न प्रतिपाद्यसे कथं परप्रसिद्ध्या क्वचिदभ्युनुज्ञानं ? तं न प्रतिपाद्यसे तत्प्रसिद्ध्या च किंचिदभ्यनुजानासीति कथमनुन्मत्तः ?। अथ परं प्रतिपाद्यसे तर्हि यतः प्रमाणात्तत्प्रतिपत्तिः तत्स्वकीयार्थव्यवसायात्मकं सिद्धं तस्याव्यवसायात्मकत्वे तेन परप्रतिपत्तेरयोगात्। यदि पुनः पराभ्युपगमांतरात्परप्रतिपत्तिरिति मतं तदाप्यनिवृत्तः पर्यनुयोगः तस्यापि पराभ्युपगमांतरस्य प्रतिपत्त्यप्रतिपत्तिपूर्वकत्वे पूर्वोक्तदूषणानतिक्रमात्।

स्यान्मतं न बहिरर्थाः परमार्थतः संति तत्प्रत्ययानां निरालंबनत्वात् स्वप्नप्रत्ययवत् संतानांतरविज्ञानानामपि असत्त्वात्। तत्र स्वरूपमात्रव्यवसायात्मकमेव विज्ञानमिति तदप्यसारं तथाहि—सर्वप्रत्ययानां निरालंबनत्वं न तावत्प्रत्यक्षतः सिद्ध्यति तस्य तद्विषयत्वात्। विवादापन्नाः प्रत्यया निरालंबना एव प्रत्ययत्वात् स्वप्नेंद्रजालादिवदिति अनुमानान्निरालंबनत्वसिद्धिरित्यपि मिथ्या स्वसंतानप्रत्ययेन व्यभिचारात्। तस्यापि संतानांतरप्रत्ययवत्पक्षीकरणे किमिदमनुमानज्ञानं स्वसाध्यार्थालंबनं निरालंबनं वा ? प्रथमपक्षे तेनैवानैकांतिकत्वं प्रत्ययत्वं। द्वितीयकल्पनायां नातो निरालंबनत्वसिद्धिः। परब्रह्मस्वरूपसिद्धिरेव सकलभेदप्रत्ययानां निरालंबनत्वसिद्धिः ? इत्यपि न व्यवतिष्ठते परब्रह्मण एवाप्रसिद्धेः। तद्धि स्वतो वा सिद्ध्येत् परतो वा ? न तावत्स्वत एव विप्रतिपत्त्यभावप्रसंगात्। परतश्चेदनुमानादागमाद्वा ? यद्यनुमानात् किमत्रानुमानमित्यभिधीयतां। विवादापन्नोऽर्थः प्रतिभासांतः प्रविष्ट एव प्रतिभासमानत्वात्। यो यः प्रतिभासमानः स स प्रतिभासांतःप्रविष्ट एव दृष्टः यथा प्रतिभासस्यात्मा प्रतिभासमानश्च सकलोऽर्थश्चेतनाचेतनात्मको विवादापन्नः तस्मात्प्रतिभासांतःप्रविष्ट एवेत्यनुमानं न सम्यक् धर्मि-हेतु-दृष्टांतानां प्रतिभासांतःप्रविष्टत्वे साध्यांतःपातित्वेन अनुमानोत्थानायोगात्। प्रतिभासांतः प्रविष्टत्वाभावे तैरेवेति हेतोर्व्यभिचारात्। यदि पुनरनाद्यविद्यावासनावलाद्धर्मि-हेतु-दृष्टांताः प्रतिभासबहिर्भूता इव निश्चीयंते प्रतिपाद्यप्रतिपादकसभ्यसभापतिजनवत्। ततोऽनुमानमपि संभवत्येव सकलानाद्यविद्याविलासविलये तु प्रतिभासांतःप्रविष्टमखिलं प्रतिभासमेवेति विप्रतिपत्त्यसंभवात्। प्रतिपाद्यप्रतिपादकभावाभावात् साध्यसाधनभावानुपपत्तेर्न किंचिदनुमानोपन्यासफलं। स्वयमनुभूयमाने परब्रह्मणि प्रतिभासात्मनि देशकालाकारावच्छिन्नस्वरूपे निर्व्यभिचारे सकलकालावस्थाव्यापिनि—अनुमानाप्रयोगात् इति समभिधीयते तदा साप्यनाद्यविद्या यदि प्रतिभासांतःप्रविष्टा तदाविद्यैव कथमसंतं धर्मिदृष्टांतादिभेदमुपदर्शयेत्। अथ प्रतिभासबहिर्भूतास्तदा साऽप्रतिभासमाना प्रतिभासमाना वा ? न तावदप्रतिभासमाना भेदे प्रतिभासरूपत्वात् तस्याः। प्रतिभासमाना चेत् तयैव हेतोर्व्यभिचारः प्रतिभासबहिर्भूतत्वेऽपि तस्याः प्रतिभासमानत्वात्।

स्यादाकूतं—न प्रतिभासमाना नाप्रतिभासमाना न प्रतिभासबहिर्भूता नापि प्रतिभासांतःप्रविष्टा नैका नचानेका न नित्या नाप्यनित्या न व्यभिचारिणी नाप्यव्यभिचारिणी सर्वथा विचार्यमाणायोगात्। सकलविचारातिक्रांतस्वरूपैव रूपांतराभावात् अविद्याया नीरूपतालक्षणत्वात् इति। तदेतदप्यविद्याविजृंभितमेव तथाविधनीरूपतास्वभावायाः केनचिदविद्यायाः कथंचिदप्रतिभासमानायाः वक्तुमशक्तेः। प्रतिभासमानायास्तु तथावचने कथमसौ सर्वथा नीरूपा स्यात् ? येन स्वरूपेण यः प्रतिभासते तस्यैव

तद्रूपत्वात् । तथा सकलविचारातिक्रांततया किमसौ विचारगोचरा अविचारगोचरा वा स्यात् ? प्रथमकल्पनायां सकलविचारातिक्रांततया विचारानतिक्रांतत्वाभ्युपगमव्याघातः । द्वितीयकल्पनायां न सकलविचारातिक्रांतता व्यवतिष्ठते सकलविचारातिक्रांततायामपि तस्यास्तया व्यवस्थाने सर्वथैकानेकरूपताया अपि व्यवस्थानप्रसंगात् । तस्मात्सत्स्वभावैवाविद्याभ्युपगंतव्या विद्यावत् । तथा च विद्याऽविद्याद्वैतप्रसिद्धेः कुतः परमब्रह्मणोऽनुमानात्सिद्धिः ? । एतेनोपनिषद्वाक्यात्परमपुरुषसिद्धिः प्रत्याख्याता । सर्वं वै खल्विदं ब्रह्मेत्यादिवाक्यस्य परमात्मनोऽर्थांतरभावे द्वैतप्रसक्तेरविशेषात् । तस्यानाद्यविद्यात्मकत्वेऽपि पूर्वोदितदूषणप्रसंगात् ततो न परमपुरुषाद्वैतसिद्धिः स्वतः परतो वा येन सम्यग्ज्ञानं स्वव्यवसायात्मकमेव न पुनरर्थव्यवसायात्मकं—अर्थाभावादिति वदन् अवधेयवचनः स्यात् ।

यत्तु स्वप्नज्ञानं स्वव्यवसायात्मकमेवेत्युक्तं तदपि न संगतं तस्य साक्षात्परंपरया वार्थव्यवसायात्मकत्वाघटनात् । द्विविधो हि स्वप्नः सत्योऽसत्यश्च तत्र सत्यो देवताकृतः स्यात् धर्माधर्मकृतो वा कस्यचित्साक्षाद्व्यवसायात्मकः प्रसिद्धः स्वप्नदशायां यद्देशकालाकारतयार्थः प्रतिपन्नः पुनर्जागृद्दशायामपि तद्देशकालाकारतयैव तस्य व्यवसीयमानत्वात् । कश्चित्सत्यः स्वप्नः परंपरयार्थ–व्यवसायी स्वप्नाध्यायनिगदितार्थप्रापकत्वात् । तदुक्तं—

यस्तु पश्यति रात्र्यंते[1] राजानं कुंजरं हयं ।
सुवर्णं वृषभं गां च कुटंबं तस्य वर्धते ॥ १ ॥

इति कुटुंबवर्धनाविनाभाविनः स्वप्ने राजादिदर्शनस्य कथमर्थनिश्चायकता न स्यात ? पावकाविनाभाविधूमदर्शनवत । दृष्टार्थाव्यवसायात्मकत्वान्न स्वप्नबोधोऽर्थव्यवसायी इति वचने लैंगिकोऽपि बोधोऽर्थव्यवसायी माभूत । तत एव तद्वत् । अनुमानबाधोऽनुमितार्थव्यवसायी संभवतीति वचने स्वप्नागमगम्यार्थव्यवसायी स्वप्नबोधोऽपि कथं नाभ्यनुज्ञायते ? । कदाचिद्व्यभिचारदर्शनान्नैवमभ्युपगमः कर्तुं सुशक्य इति चेन्न देशकालाकारविशेषं यथार्थागमोदितमपेक्ष्यमाणस्य क्वचित्कदाचित्कथंचिद्व्यभिचाराभावात् । तदपेक्षाविकलस्तु न समीचीनः स्वप्नः तस्य स्वप्नाभासत्वात् । प्रतिपत्तुरपराधाच्च व्यभिचारः संभाव्यते न पुनरनपराधात् यथा चाधूमः धूमबुद्ध्या प्रतिपद्यमानस्य ततः पावकानुमानं व्यभिचारीति प्रतिपत्तुरेवापराधो न धूमस्य धीमद्भिरभिधीयते । तथैवास्वप्नं स्वप्नबुद्ध्याध्यवस्य ततस्तद्विषयाध्यवसायो न व्यभिचरतीति न स्वप्नागमस्यापराधः प्रतिपत्तेरेवापराधात् । यः पुनरसत्यः स्वप्नः पित्ताद्युद्रेकजनितः स किमर्थसामान्यं व्यभिचरति अर्थविशेषं वा ? न तावदर्थसामान्यं देशकालाकारविशेषाणामेव व्यभिचारात् सर्वत्र सर्वदा सर्वथार्थसामान्यस्य सद्भावात् । तदभावेऽर्थविशेषेषु संशयविपर्यासस्वप्नायथार्थज्ञानानामनुत्पत्तेः न हि किंचिद् ज्ञानं सत्तामात्रं व्यभिचरति तस्यानुत्पत्तिप्रसक्तेः ततोऽसत्यस्वप्नस्याप्यर्थसामान्यव्यवसायात्मकत्वसिद्धेः न किंचिद् ज्ञानमर्थाव्यवसायात्मकं । विशेषं तु यत एव व्यभिचरति तत एव असत्यः कथमन्यथा सत्येतरव्यवस्थितिः स्यात् ? तस्याः स्वार्थविशेषप्राप्त्यप्राप्तिनिमित्तत्वादित्यलं प्रसंगेन स्वव्यवसायात्मकत्ववत् सम्यग्ज्ञानस्यार्थव्यवसायात्मकत्वप्रसिद्धेः ।

अत्रापरः प्राह—सम्यग्ज्ञानमर्थव्यवसायात्मकमेव न स्वव्यवसायात्मकं स्वात्मनि क्रियाविरोधात् एकस्य ज्ञानस्यानेकाकारानुपपत्तेः । न हि ज्ञानमेकमाकारं कर्मतामापन्नं व्यवस्यति कर्मात्मनाकारेणेति वक्तुं यक्तुं ताभ्यां कर्मकरणाकाराभ्यां ज्ञानस्याभेदे भेदप्रसंगात् । न हि भिन्नाभ्यां ताभ्यामभिन्नमेकं नाम अतिप्रसंगात् । तयोर्वाकारयोर्ज्ञानादभेदे भेदप्रसंगात् नह्यभिन्नादभिन्नयोर्भेदःसंभाव्यते अतिप्रसंगात् । एवं ताभ्यां विज्ञानस्य भेदोपगमे न विज्ञानमात्मनात्मानं व्यवस्यति परात्मना परात्मन एव व्यवसायात् तौ चाकारौ यदि ज्ञानस्यात्मानौ तदा ज्ञानं व्यवस्यति वा न वा ? प्रथमपक्षे किमेकेनाकारांतरेण द्वाभ्यां वाऽकारांतराभ्यां तत्तौ व्यवस्येत । न तावदेकेनाकारांतरेण विरोधात् । द्वाभ्यां व्यवस्यति इति चेत् तयोरप्याकारांतरयोर्ज्ञानादभेदो भेदो वा स्यात्[2]

१ स्वप्नांते इति पाठांतरं । २ अर्थव्यवसायः पाठांतरं ।

इत्यनिष्टः पर्यनुयोगः—अनवस्था च महीयसी। कथंचिद्भेदः कथंचिदभेदः इत्युभयपक्षालंबनमपि अनेनैवापास्तं पक्षद्वयनिक्षिप्तदोषानुषंगात् पक्षांतराऽसंभवाच्चेति सोऽपि न न्यायकुशलः प्रतीत्यतिलंघनात्। लोके हि ज्ञानस्य स्वव्यवसायिन एवार्थव्यवसायित्वेन प्रतीतिः सिद्धा। नचेयं मिथ्या बाधकाभावात्। स्वात्मनि क्रियाविरोधो बाधक इति चेत् का पुनः क्रिया? किमुत्पत्तिर्ज्ञप्तिर्वा? यद्युत्पत्तिः सा स्वात्मनि विरुध्यतां। न हि वयमभ्यनुजानीमहे ज्ञानमात्मानमुत्पादयति इति।

**नैकं स्वस्मात्प्रजायते**

इति समंतभद्रस्वामिभिरभिधानात्। अथ ज्ञप्तिः क्रिया सा स्वात्मनि विरुद्धा तदात्मनैव ज्ञानस्य स्वकारणकलापादुत्पादात्। प्रकाशात्मनैव प्रकाशस्य प्रदीपादेः। न हि स्वकारणसामिग्रीतः प्रदीपादिप्रकाशः समुपजायमानः स्वप्रकाशात्मना नोत्पद्यत इति प्रातीतिकं तत्स्वरूपप्रकाशेन प्रकाशांतरापेक्षाप्रसंगात्। नचायं प्रदीपाद्यालोकः कलशादिज्ञानं स्वरूपज्ञानं च चक्षुषोजनयतः सहकारित्वं नात्मसात्कुरुते येन स्वप्रकाशको न स्यात्। चक्षुषः सहकारित्वं हि प्रदीपादेः प्रकाशत्वं तच्च कलशादाविव स्वात्मन्यपि दीपादेर्विद्यत एवेति सिद्धा स्वात्मनि प्रकाशनक्रिया। तद्वद्विज्ञानस्यार्थप्रकाशनमिव स्वप्रकाशनमप्यविरुद्धमवबुध्यतां। एतेन 'ज्ञानं न स्वप्रकाशकं, अर्थप्रकाशकत्वादित्यनुमानमपास्तं प्रदीपादिना हेतोरनेकांतात्। प्रदीपादिः-उपचारात् प्रकाशको न परमार्थत इति तेनाव्यभिचारे चक्षुरादेरपि परमार्थतोऽर्थाऽप्रकाशकत्वात् साधनशून्यो दृष्टांतः ज्ञानस्यैव परमार्थतोऽर्थप्रकाशत्वोपपत्तेः। ततो 'ज्ञानं स्वप्रकाशकं, अर्थप्रकाशकत्वात् यत्तु न स्वप्रकाशकं तन्नार्थप्रकाशकं दृष्टं यथा कुड्यादिकं। अर्थप्रकाशकं च ज्ञानं तस्मात्स्वप्रकाशकमिति केवलव्यतिरेक्यनुमानमविनाभावनियमनिश्चयलक्षणाद्धेतोरुत्पद्यमानं निरवद्यमेवेति बुध्यामहे। चक्षुरादिभिः परमार्थतोऽर्थप्रकाशकत्वासिद्धेस्तेन साधनस्यानेकांतिकतानुपपत्तेः। कुड्यादेरपि स्वाविनाभाविपदार्थांतरप्रकाशकत्वाद्धूमादिवत् साधनाव्यतिरेको दृष्टांत इत्यपि समुत्सारितमनेन तस्याप्युपचारादर्थप्रकाशकत्वासिद्धेः अन्यथा तज्जनितविज्ञानवैयर्थ्यापत्तेः। यत्पुर्ज्ञानमात्मानमात्मना जानातीति कर्मकरणाकारद्वयपरिकल्पनायामनवस्थादिदोषानुषंगो बाधक इति मतं तदपि न सुंदरतरं तथाप्रतीतिसिद्धत्वात्। जात्यंतरत्वादाकारवतोर्भेदाभेदं प्रत्यनेकांतात्। कर्मकरणाकारयोर्ज्ञानात् कथंचिदभेदः कथंचिद्भेदः इति नैकांतेन भेदाभेदपक्षोपक्षिप्तदोषोपानिपातः स्याद्वादिनां संलक्ष्यते। नच कथंचिदित्यंधपदमात्रं ज्ञानात्मना तदभेदस्य कथंचिदभेदशब्देनाभिधानात्। कर्मकरणात्मना च भेद इति कथंचिद्भेदध्वनिना दर्शितत्वात्। तथा च ज्ञानात्मना तदभेद इति ज्ञानभेदाभेदस्ततो भिन्नस्य ज्ञानात्मनोऽप्रतीतेः। कर्मकरणाकारतया च भेद इति कर्मकरणाकारावेव भेदस्य द्रव्यव्यतिरिक्तस्याकारस्याप्रतीयमानत्वात् इति। येनात्मना ज्ञानात् कर्मकरणाकारयोरभेदो येन च भेदस्तौ ज्ञानात्किंमभिन्नौ भिन्नौ वा इति न पर्यनुयोगस्यावकाशोऽस्ति यथाऽनवस्था महीयसी संप्रसज्येत। नच भिन्नाभ्यामेव कर्मकरणाभ्यां भवितव्यमिति नियमोऽस्ति करणस्य भिन्नकर्तृकस्यापि दर्शनात् भिन्नकर्तृकरणवत्। यथैव हि देवदत्तः परशुना छिनत्ति काष्ठमित्यत्र देवदत्तात्कर्तुर्भिन्नं परशुलक्षणं करणमुपलभ्यते। तथाग्निर्दहति दहनात्मनेत्यत्राग्नेः कर्तुर्दहनात्मलक्षणं करणमाभिन्नमुपलभ्यत एवं दहनात्माप्युष्णलक्षणः स चाग्नेर्गुणिनो भिन्न एवेति न मंतव्यं सर्वथा तयोर्विरोधे गुणगुणीभावविरोधात् सह्यविंध्यवत्। गुणिनि गुणस्य समवायात् तयोस्तद्भाव इत्यपि न सत्यं समवायस्य कथंचिदाविष्वग्भावात् अन्यस्य विचारासहत्वात्। समित्येकीभावेनावायनमवगमनं हि समवायः तच्च समवायनं कर्मस्थं समवेयमानत्वं समवायितादात्म्यं प्रतीयते, कर्तृस्थं पुनः समवायनं समवायकत्वं प्रमातुस्तादात्म्येन समवायिनोर्ग्राहकत्वं न चान्या गतिरस्ति क्रियायाः कर्तृकर्मस्थतयैव प्रतिपादनात् तत्र—

**कर्मस्था क्रिया कर्मणोऽनन्या कर्तृस्था कर्तुरनन्या**

इति वचनात्। ततो नाभिन्नकर्तृकं करणमप्रसिद्धं। नापि कर्म तस्यापि भिन्नकर्तृकस्येवाभिन्नकर्तृकस्यापि प्रतीतेः। यथैव हि कटं करोतीत्यत्र कर्तुर्भिन्नं कर्मानुमन्यते। तथा प्रदीपः प्रकाशयत्यात्मानमि-

सत्र कर्तुरभिन्नं कर्म संप्रतीयत एव। न हि प्रदीपात्मा प्रदीपाद्भिन्न एव प्रदीपस्याप्रदीपत्वप्रसंगात् घटवत्। प्रदीपे प्रदीपात्मनोभिन्नस्यापि समवायात् प्रदीपत्वसिद्धिरितिचेत् न अप्रदीपेऽपि घटादौ तत्समवायप्रसंगात्। प्रत्यासत्तिविशेषात्प्रदीपात्मनः प्रदीप एव समवायो नान्यत्रेति चेत् ? स प्रत्यासत्तिविशेषोऽत्र कोऽन्यत्र कथंचित्तादात्म्यात् ? ततः प्रदीपादभिन्न एव प्रदीपात्मा कर्मेति सिद्धमभिन्नकर्तृकं कर्म। तथा च ज्ञानात्मात्मानमात्मना जानातीति न स्वात्मनि ज्ञप्तिलक्षणायाः क्रियाया विरोधः सिद्धः, यतः स्वव्यवसायात्मकं ज्ञानं न स्यात्।

स्यान्मतं—अर्थज्ञानं ज्ञानांतरवेद्यं प्रमेयत्वात् घटादिवदित्यनुमानं स्वार्थव्यवसायात्मकत्वप्रतीतेर्बाधकमिति तदपि फल्गुप्रायं महेश्वरार्थज्ञानेन हेतोर्व्यभिचारात्। तस्य ज्ञानांतरावेद्यत्वेऽपि प्रमेयत्वात्। यदि पुनरीश्वरार्थज्ञानमपि ज्ञानांतरप्रत्यक्षं–असंवेद्यत्वात् इति मितिस्तदा तदप्यर्थज्ञानज्ञानमीश्वरस्य प्रत्यक्षमप्रत्यक्षं वा ? यदि प्रत्यक्षं तदा स्वतो ज्ञानांतराद्वा ? । स्वतश्चेत् प्रथममप्यर्थज्ञानं स्वतः प्रत्यक्षमस्तु किं विज्ञानांतरेण ? । यदि तु ज्ञानांतरात्प्रत्यक्षं तदपीष्यते तदा तदपि ज्ञानांतरं किमीश्वरस्य प्रत्यक्षमप्रत्यक्षं वेति स एव पर्यनुयोगो ऽनवस्थानं च दुःशक्यं परिहर्तुं। यदि पुनरप्रत्यक्षमेवेश्वरार्थज्ञानज्ञानं तदेश्वरस्य सर्वज्ञत्वविरोधः स्वज्ञानस्याप्रत्यक्षत्वात्। तदप्रत्यक्षत्वे च प्रथमार्थज्ञानमपि न तेन प्रत्यक्षं स्वयमप्रत्यक्षेण ज्ञानांतरेण तस्यार्थज्ञानस्य साक्षात्करणविरोधात्। कथमन्यथा आत्मांतरज्ञानेनापि कस्यचित्साक्षात्करणं न स्यात्। तथा चानीश्वरस्यापि सकलस्य प्राणिनः स्वयमप्रत्यक्षेणापीश्वरज्ञानेन सर्वविषयेण सर्वार्थसाक्षात्करणं संगच्छेत ततः सर्वस्य सर्वार्थवेदित्वासिद्धेः–ईश्वरानीश्वरविभागाभावो भूयते। यदा चार्थज्ञानमपि प्रथममीश्वरस्याप्रत्यक्षमेव कक्षीक्रियते तदा तेनापि स्वयमप्रत्यक्षेण महेश्वरस्य सकलोऽर्थः प्रत्यक्षं कथं समर्थ्येत तेन सकलप्राणिगणस्य सर्वार्थसाक्षात्करणप्रसंगस्य तदवस्थत्वात्। तदनेन वादिना महेश्वरस्यापि किंचिज्ज्ञत्वं सर्वस्य वा सर्वज्ञत्वमनुज्ञातव्यं न्यायबलायातत्वात्। तथाप्यनुज्ञाने वा नैयायिकस्य नैयायिकत्वविरोधः केनास्य वार्येत। यदि पुनरीश्वरस्य ज्ञानं सकलार्थवदात्मानमपि साक्षात्कुरुते नित्यैकरूपत्वात्, क्रमभाव्यनेकानित्यज्ञानोपगमे महेश्वरस्य सकृत्सर्वार्थसाक्षात्करणविधानात् सर्वज्ञत्वाव्यवस्थितेरिति मतं तदा कथमनेनैवानैकांतिको हेतुर्न स्यात्। स्यान्मतिरेषा युष्माकमस्मदादिज्ञानापेक्षयार्थज्ञानस्य ज्ञानांतरवेद्यत्वं प्रमेयत्वेन हेतुना साध्यते ततो नेश्वरज्ञानेन व्यभिचारः तस्यास्मदादिज्ञानाद्विशिष्टत्वात्। न हि विशिष्टे दृष्टं धर्ममविशिष्टेऽपि घटयन् प्रेक्षावत्तां लभते इति सापि न परीक्षासहा ज्ञानांतरस्यापि प्रज्ञानेन वेद्यत्वेऽनवस्थानुषंगात्। तस्य ज्ञानांतरेण वेद्यत्वे तेनैव हेतोर्व्यभिचारः। न च तदप्रमेयमेव सर्वस्येति वक्तुं शक्यं प्रतिपत्तुः प्रमाणबलात्तद्व्यवस्थानविरोधात्। सर्वज्ञज्ञानेनापि तस्याप्रमेयत्वे सर्वज्ञस्य सर्वज्ञताव्याघातात्। ततोऽस्मदादिज्ञानापेक्षयापि न ज्ञानं ज्ञानांतरप्रत्यक्षं प्रमेयत्वाद्धेतोः साधयितुं शक्यं, ज्ञानस्य स्वार्थव्यवसायात्मनः प्रत्यक्षसिद्धत्वाच्च। प्रत्यक्षबाधितपक्षतया हेतोः कालात्ययापदिष्टत्वप्रसंगाच्च। एतेनार्थज्ञानेन ज्ञानांतरवेद्ये साध्ये कालत्रयत्रिलोकवर्तिपुरुषपरिषत्संप्रयुक्तसकलहेतुनिकरस्य कालात्ययापदिष्टत्वं व्यस्यातं। तदनेन यदुक्तमेकात्मसमवेतानंतरविज्ञानग्राह्यमर्थज्ञानमिति तत्समुत्सारितं।

योऽप्याह न स्वार्थव्यवसायात्मकं ज्ञानं परोक्षत्वात् अर्थस्यैव प्रत्यक्षत्वात्। अप्रत्यक्षा नो बुद्धिः प्रत्यक्षोऽर्थः। स हि बहिर्देशसंबद्धः प्रत्यक्षमनुभूयते। ज्ञाते त्वर्थे अनुमानादवगच्छति बुद्धिरिति सावरभाष्ये श्रवणात्। तथा ज्ञानस्यार्थवत् प्रत्यक्षत्वे कर्मत्वप्रसंगात् ज्ञानांतरस्य करणस्यावश्यं परिकल्पनीयत्वात्। तस्य चाप्रत्यक्षत्वे प्रथमे कोऽपरितोषः ?। प्रत्यक्षत्वे तस्यापि पूर्ववत्कर्मतापत्तेः करणात्मनोऽन्यविज्ञानस्य परिकल्पनायामनवस्थाया दुर्निवारत्वात्। तथैकस्य ज्ञानस्य कर्मकरणद्वयाकारप्रतीतिविरोधाच्च न ज्ञानं प्रत्यक्षं परीक्षकैरनुमंतव्यमिति सोऽपि न यथार्थमीमांसकतामनुसर्तुमुत्सहते ज्ञानस्याप्रत्यक्षत्वे सर्वार्थस्य प्रत्यक्षत्वविरोधात्। संतानांतरज्ञानेनापि सर्वस्यार्थस्य प्रत्यक्षत्वप्रसंगात्। तथा च न कस्यचित्कदाचिदर्थप्रत्यक्षः स्यात्।

स्यादाकूतं भवतां यस्यात्मनोऽर्थे परिच्छित्तिः प्रादुर्भवति तस्य ज्ञानेन सोऽर्थः प्रतीयते न सर्वस्य ज्ञानेन सर्वोऽर्थः प्रत्यक्षः सर्वस्य प्रमातुः सर्वत्रार्थे परिच्छित्तेरसंभवात् इति तदपि स्वगृहमान्यं मीमांसकानां क्वचिदर्थपरिच्छित्तेः प्रत्यक्षत्वाप्रत्यक्षत्वविकल्पानतिक्रमात्। सा हि न तावत्प्रत्यक्षा ज्ञानधर्मकत्वात्। कर्मत्वेनाप्रतीतिश्च करणज्ञानवत्। तस्याः कर्मत्वेनाप्रतीतावपि क्रियात्वेन प्रतीतेः। प्रत्यक्षत्वे करण ज्ञानस्य कर्मत्वेनाप्रतीयमानस्यापि करणत्वेन प्रतीयमानत्वात्। प्रत्यक्षत्वमस्तु करणत्वेन प्रतीयमानं करणज्ञानं करणमेव स्यात्। न प्रत्यक्षं कर्मलक्षणमिति चेत् तर्हि पदार्थपरिच्छित्तिरपि क्रियात्वेन प्रतिभासमाना क्रियेव स्यात् न प्रत्यक्षा कर्मत्वाभावादिति प्रतिपत्तव्यं। यदि पुनरर्थधर्मत्वादर्थपरिच्छित्तेः प्रत्यक्षतेष्यते तदा सार्थप्राकट्यमुच्यते। न चैतदर्थग्रहणविज्ञानस्य प्राकट्याभावे घटामटति अतिप्रसंगात्। न ह्यप्रकटेऽर्थज्ञाने संतानांतरवर्तिनिकरस्य चिदर्थस्य प्राकट्यं घटते प्रमातुरात्मनः स्वयं प्रकाशमानस्य प्रत्यक्षस्यार्थ परिच्छेदकस्य प्राकाट्यादर्थे प्राकट्यं परिच्छित्तिलक्षणं संलक्ष्यते। परिच्छित्तेः परिच्छेदकस्वरूपायाः कर्तृस्थयाः क्रियाया कर्तृधर्मत्वादुपचारादर्थधर्मत्ववचनात् परिच्छिद्यमानतारूपायाः परिच्छित्तेः कर्मस्थायाः क्रियाया एव परमार्थतोऽर्थधर्मत्वसिद्धेः। करणज्ञानधर्मतानुच्छित्तेर्नेष्यते एव चक्षुषा रूपं पश्यति देवदत्त इत्यत्र चक्षुषः प्राकट्याभावेऽपि अर्थप्राकट्यं सुघटमेव लोकेऽतींद्रियस्यापि करणत्वसिद्धेः इति केचित् समम्यमंसत मीमांसकाः, तेऽप्यंधसर्पविलप्रवेशन्यायेन स्याद्वादिमतमेवानुप्रविशंति, स्याद्वादिभिरपि स्वार्थपरिच्छेदकस्य प्रत्यक्षस्यात्मनः कर्तृसाधनज्ञानशब्देनाभिधानात्। स्वार्थज्ञानपरिणतस्यात्मन एव स्वतंत्रस्य ज्ञानत्वोपपत्तेः, स हि जानातीति ज्ञानमिति व्यपदिश्यते। तद्धर्मस्तु परिच्छित्तिः फलज्ञानं कथंचित्प्रमाणाद्भिन्नमभिधीयते। यत्तु परोक्षमतींद्रियतया करणज्ञानं परैरुक्तं तदपि स्याद्वादिभिर्भावेंद्रियतया करणमुपपयोगलक्षणं प्रोच्यते 'लब्ध्युपयोगौ भावेंद्रियं' इति वचनात्। तत्रार्थग्रहणशक्तिर्लब्धिः। अर्थग्रहणव्यापार उपयोगः इति व्याख्यानात् केवलं तस्य कथंचिदात्मनोऽनर्थांतरभावादात्मतया प्रत्यक्षत्वोपपत्तेः अप्रत्यक्षतैकांतो निरस्यते इति प्रातीतिकं परीक्षकैरनुमंतव्यं। ये तु मन्यंते नात्मा प्रत्यक्षः कर्मत्वेनाप्रतीयमानत्वात् करणज्ञानवदिति तेषां फलज्ञानहेतोर्व्यभिचारः कर्मत्वेनाप्रतीयमानस्यापि फलज्ञानस्य प्राभाकरैः प्रत्यक्षत्ववचनात्। तस्य क्रियात्वेन प्रतिभासमानात् प्रत्यक्षत्वे प्रमातुरप्यात्मनः कर्तृत्वेन प्रति भासमानत्वात् प्रत्यक्षत्वमस्तु। तच्च फलज्ञानं—आत्मनोऽर्थांतरभूतमनर्थांतरभूतमुभयं वा? न तावत्स्वार्थांतरभूतमनर्थांतरभूतं वा मतांतरप्रवेशानुषंगात्। नाप्युभयं पक्षद्वयनिगदितदूषणानुषक्तेः। कथंचिदनर्थांतरत्वे तु फलज्ञानादात्मनः कथंचित्प्रत्यक्षत्वमनिवार्यं प्रत्यक्षादभिन्नस्य कथंचिदप्रत्यक्षत्वैकांतविरोधात्। एतेनाप्रत्यक्ष एवात्मेति प्रभाकरमतमपास्तं। यस्य तु करणज्ञानवत्फलज्ञानमपि परोक्षं पुरुषः प्रत्यक्ष इति मतं तस्यापि पुरुषात्प्रत्यक्षात् कथंचिदभिन्नस्य फलज्ञानस्य करणज्ञानस्य च प्रत्यक्षतापत्तिः कथंचित्क्रमपाक्रियते? ततो न भट्टमतमपि विचारणां प्रांचति इति स्वव्यवसायात्मकं सम्यग्ज्ञानं, अर्थपरिच्छित्तिनिमित्तत्वात् आत्मवदिति व्यवतिष्ठते। नेत्रालोकादिभिर्व्यभिचारः साधनस्येति न मंतव्यं तेषामुपचारतोऽर्थ परिच्छित्तिनिमित्तत्ववचनात्, परमार्थतः प्रमातुः प्रमाणस्य च तन्निमित्तत्वघटनात्।

अत्रापरः कपिलमतानुसारी प्राह—न सम्यग्ज्ञानं स्वव्यवसायात्मकं, अचेतनत्वात् घटादिवत् न तच्चेतनमनित्यत्वात्। तद्वदनित्यं चोत्पत्तिनिमित्तत्वात् विद्युदादिवत्। यत्तु स्वसंवेद्यं तच्चेतनं नित्यमनुत्पत्तिधर्मकं च सिद्धं यथा पुरुषतत्त्वमिति सोऽपि न न्यायवेदी व्यभिचारिसाधनाभिधानात्। उत्पत्तिमत्त्वं हि तावदनित्यतां व्यभिचरति निर्वाणस्यानंतस्याप्युत्पत्तिमत्त्वात्। तथैवानित्यत्वमचेतनत्वं व्यभिचरति पुरुषभोगस्य कादाचित्कत्वस्य बुद्ध्यध्यवसीतार्थापेक्षस्य चेतनत्वेऽप्यनित्यत्वसमर्थनात्। अचेतनत्वं तु सम्यग्ज्ञानस्याशुद्धमेव तस्मादचेतनाद्विवेकख्यातिविरोधात्। चेतनसंसर्गाच्चेतनं ज्ञानमित्यपि वार्तं शरीरादेरपि चेतनत्वसंगात्। ज्ञानस्य चेतनसंसर्गो विशिष्ट इति चेत् स कोऽन्यः कथंचित्तादात्म्यात्। ततश्चेतनात्मकमेव ज्ञानमनुमंतव्यमित्यचेतनमसिद्धं।

यदप्यभ्यधायि सांख्यैः–ज्ञानमचेतनं प्रधानपरिणामत्वात् महाभूतवदिति तदपि न श्रेयः पक्षस्य स्वसंवेदनप्रत्यक्षबाधितत्वात् । प्रतिवादिनः कालात्ययापदिष्टत्वाच्च साधनस्य । तथानुमानबाधितः पक्षः परं प्रति चेतनं ज्ञानं स्वसंवेद्यत्वात् पुरुषवत् । यत्तु न चेतनं न तत्स्वसंवेद्यं यथा कलशादीति व्यतिरेकनिश्चयात् नेदमनुमानमगमकं । ज्ञानस्य स्वसंवेद्यत्वमसिद्धं ? इति चेन्न तस्यास्वसंवेद्यत्वे अर्थसंवेदनविरोधादित्युक्तप्रायं । एतेन न स्वसंवेद्यं विज्ञानं कायाकारपरिणतभूतपरिणामत्वात् पित्तादिवदिति वदंश्चार्वाकः प्रतिक्षिप्तः । न चेदं साधनं सिद्धं भूतविशेषपरिणामत्वासिद्धेः संवेदनस्य बाह्येंद्रियप्रत्यक्षत्वप्रसंगात् गंधादिवत् । सूक्ष्मभूतविशेषपरिणामत्वात् न बाह्येंद्रियप्रत्यक्षं ज्ञानमिति चेत् स तर्हि सूक्ष्मविशेषः स्पर्शादिभिः परिवर्जितः स्वयमस्पर्शादिमान् संवेदनोपादानहेतुः सर्वदा बाह्येंद्रियाविषयः कथमात्मैव नामांतरेण निगदितो न भवेत् । तस्य ततोऽन्यत्वे भूतचतुष्टयाविलक्षणत्वात् तत्त्वांतरापत्तिरदृष्टपरिकल्पना च प्रसज्येत तथात्मनः प्रमाणसिद्धत्वात् तत्परिणामस्यैव ज्ञानस्य घटनात् । तत इदं व्यवतिष्ठते स्वव्यवसायात्मकं सम्यग्ज्ञानं चेतनात्मपरिणामत्वे सत्यर्थपरिच्छेदकत्वात् यत्तु न स्वव्यवसायात्मकं न तत्तथा यथा घटः तथा च सम्यग्ज्ञानं तस्मात्स्वव्यवसायात्मकं इति सम्यग्ज्ञानलक्षणं प्रमाणसिद्धं ।

ननु प्रमाणतत्त्वस्य प्रमेयतत्त्ववदुपप्लुतत्वात् न तत्त्वतः किंचित्प्रमाणं संभवति इति कस्य लक्षणमभिधीयते लक्ष्यानुवादपूर्वकत्वाल्लक्षणाभिधानस्य । प्रसिद्धं लक्ष्यमनूद्य लक्षणं विधीयत इति लक्ष्यलक्षणभाववादिभिरभ्युपगमात् इति केचिदमंसत तेषां तत्त्वोपप्लवमात्रमिष्टं साधयितुं तदा साधनमभ्युपगंतव्यं । तच्च प्रमाणमेव भवति तथा चेदमभिधीयते–तत्त्वोपप्लववादिनोऽप्यस्ति प्रमाणं, इष्टसाधनान्यथानुपपत्तेः । प्रमाणाभावेऽपीष्टसिद्धौ सर्वं सर्वस्य यथेष्टं सिद्ध्येत् इत्यनुपप्लुततत्त्वसिद्धिरपि किं न स्यात् सर्वथा विशेषाभावात् ।

स्यादाकूतं न स्वेष्टं विधिप्राधान्येन साध्यते येन तत्त्वोपप्लवं साधयतः प्रमाणसिद्धिः प्रसज्येत । किं तर्हि ? पराभ्युपगतप्रमाणादितत्त्वनिराकरणसामर्थ्यात् परीक्षकजनयतस्तत्त्वोपप्लवमनुसराति गत्यंतराभावात् । तथाहि—प्रमाणत्वं कस्य चित्किमदुष्टकारणजन्यत्वेन बाधारहितत्वेन वा प्रवृत्तिसामर्थ्येन वा अर्थक्रियाप्राप्तिनिमित्तत्वेन वा व्यवतिष्ठते ? न तावददुष्टजन्यत्वेन तस्य प्रत्यक्षतो गृहीतुमशक्तेः करणकुशलादेरपि प्रमाणकारणत्वात् । तस्य चातींद्रियत्वोपगमात् । न चानुमानमदुष्टं कारणमुन्नेतुं समर्थं तदविनाभाविलिंगाभावात् । सत्यज्ञानं लिंगमिति चेन् न परस्पराश्रयणात् । सति ज्ञानस्य सत्यत्वे तत्कारणस्यादुष्टत्वनिश्चयात् । तस्मिन्सति ज्ञानस्य सत्यत्वसिद्धेः । यदि पुनर्बाधारहितत्वेन संवेदनस्य प्रामाण्यं साध्यते तदा किं कदाचित्कचिद्बाधकानुत्पत्त्या तत्सिद्धिराहोस्वित् सर्वत्र सर्वदा सर्वस्य प्रतिपत्तुर्बाधकानुत्पत्तेरिति पक्षद्वयमवतरति । प्रथमपक्षे मरीचिकाचक्रे सलिलसंवेदनमपि प्रमाणमासज्यते दूरस्थितस्य तत्संवेदनकाले कस्य चित्प्रतिपत्तुर्बाधकानुत्पत्तेः । द्वितीयपक्षे तु सकलदेशकालपुरुषाणां बोधकानुत्पत्तिः कथमसर्वविदोऽवबोद्धुं शक्येत तत्तत्प्रतिपत्तुः सर्ववेदित्वप्रसंगात् । यदि पुनः प्रवृत्तिसामर्थ्येन ज्ञानस्य प्रामाण्यमुन्नीयते तदा प्रमाणेनार्थमुपलब्धवतस्तदर्थे प्रवृत्तिर्यदीष्यते तद्देशोपसर्पणलक्षणा तस्याः सामर्थ्यं च फलेनाभिसंबंधः सजातीयज्ञानोत्पत्तिर्वा तदेतराश्रयदोषो दुरुत्तरः स्यात् । सति संवेदनप्रमाणत्वनिश्चये तेनार्थप्रतिपत्तौ प्रवृत्तेः । तत्सामर्थ्यस्य च घटनात् प्रवृत्तिसामर्थ्यस्य निश्चये च तेनार्थसंवेदनस्य प्रमाणत्वनिर्णीतेः प्रकारांतरासंभवात् । अथार्थक्रियानिमित्तत्वेन संवेदनं प्रमाणतामास्कंदति तदा कुतस्तस्य तन्निश्चयः स्यात् ? । प्रतिपत्तुरर्थक्रियाज्ञानादिति चेत् कुतस्तस्य प्रमाणत्वसिद्धिः ? । परमार्थक्रियाज्ञानांतराच्चेत् कथमनवस्था न भवेत् ? । अथाद्यसंवेदनादेवार्थक्रियाज्ञानस्य ·माण्यं मन्यते तदा परस्पराश्रयदोषः । सत्यर्थक्रियाज्ञानस्य प्रमाणत्वनिश्चये तद्बलादाद्यसंवेदनस्यार्थक्रियाप्राप्तिनिमित्तत्वेन प्रामाण्यनिश्चयस्तत्प्रामाण्यनिश्चयाच्च अर्थक्रियासंवेदनस्य प्रमाणतासिद्धिः कारणांतराभावात् । ततो न प्रमाणत्वं विचार्यमाणं वा व्यवतिष्ठते तदवस्थानाभावे च न प्रमेयत्वसिद्धिः इति तदेतत्सकलं प्रलापमात्रं पराभिमतप्रमाणतत्त्वनिराकरणस्य स्वयमिष्टस्य प्रमाणमंतरेण सिद्ध्ययोगात् तस्य स्वयमिष्टत्वे साधनानुपपत्तेः परपर्यनुयोगमात्रस्य करणाददोषोऽयं ।

परपर्यनुयोगपराणि हि बृहस्पतेः सूत्राणि

इति वचनात् सर्वत्र स्वातंत्र्याभावादित्येतदपि यत्किंचन भाषणमेव । किमदुष्टकारणजन्यत्वेन प्रामाण्यं साध्यते बाधारहितत्वेनेवेत्यादि पक्षाणां क्वचिन्निर्णयाभावे संदेहाभावात् परपर्यनुयोगायोगात् ।

स्यादाकूतं पराभ्युपगमात् तन्निश्चयसिद्धेः संशयोत्पत्तेर्युक्तः प्रश्नः, तथाहि–मीमांसकाभ्युपगमात् तावददुष्टकारणजन्यत्वं बाधावर्जितत्वं च निर्णीतं निश्चितत्वापूर्वार्थत्वलोकसम्मतत्ववत् । तदुक्तं—

तत्रापूर्वार्थविज्ञानं निश्चितं बाधवर्जितं ।
अदुष्टकारणारब्धं प्रमाणं लोकसम्मतं ॥ १ ॥ इति

तथा प्रवृत्तिसामर्थ्यमपि नैयायिकाभ्युपगमान्निर्णीतं–

**प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणं**

इति वचनात् । तथार्थक्रियाप्राप्तिनिमित्तत्वमविसंवादित्वलक्षणं सौगताभ्युपगमान्निर्णीतमेव प्रमाणमविसंवादिज्ञानं अर्थक्रियास्थितिः अविसंवादनं शब्दोऽप्यभिप्रायनिवेदनादिति वचनात् । तदिदानीं चार्वाकमतानुसारेण संदिह्य पर्यनुयुज्यमानं न किंचिदुपालंभमर्हति इति तदेतदपि न व्यवस्थां प्रतिपद्यते पराभ्युपगमस्य प्रमाणाप्रमाणपूर्वकत्वे संशयाप्रवृत्तेः तथाहि यदि परेषामभ्युपगमः प्रमाणपूर्वकः तदा कथं संदेहः ? प्रमाणपूर्वकस्य निर्णीतत्वात् । निर्णीतेः संशयविरोधात् । अथाप्रमाणपूर्वकः तथापि न संदेहः प्रवर्तते तस्य क्वचित्कदाचित्कथंचित् निर्णयपूर्वकत्वात् । तन्निर्णयस्यापि प्रमाणपूर्वकत्वात् । प्रमाणाभावे प्रमाण्यनिश्चयात् तन्निश्चयनिबंधनस्य च प्रमाणांतरस्याभ्यस्तविषयत्वे सर्वथा तदनुपपत्तेरित्यलं प्रसंगेन सर्वस्येष्टस्य संसिद्धेः प्रमाणप्रसिद्धेरबाधनात् अन्यथातिप्रसंगसमर्थनादिति । एतेन सर्वथा शून्यं संविदद्वैतं पुरुषाद्वैतं शब्दाद्वैतं वा समाश्रित्य प्रमाणप्रमेयभागं निराकुर्वाणाः प्रत्याख्याताः स्वयमाश्रितस्य सर्वथा शून्यस्य संविदद्वैतादेर्वा कथंचिदिष्टत्वे प्रमाणसंसिद्धेर्व्यवस्थापनात् । तस्याप्यनिष्टत्वे तद्वादित्वविरोधात् । प्रलापमात्रानुसरणापत्तेः परीक्षकत्वव्याघातात् इति । तदेवं प्रमाणतत्त्वनिर्णीतौ प्रमेयतत्त्वसिद्धिर्निर्बाधा व्यवतिष्ठत एव ।

ननु चैव प्रमाणसिद्धमपि किं स्वतः प्रमाणमात्मसात्कुर्वीति परतो वा ? न तावत्स्वतः सर्वत्र सर्वदा सर्वस्य तद्विप्रतिपत्त्यभावप्रसंगात् । नापि परतः–अनवस्थानुषंगात् परापरप्रमाणान्वेषणात् क्वचिदवस्थितेरयोगात् । प्रथमप्रमाणाद्द्वितीयस्य प्रामाण्यसाधने द्वितीयाच्च प्रथमस्य परस्पराश्रयणापत्तेः प्रकारांतराभावादिति केचित्तेऽप्यसमीक्षितवचसः संलक्ष्यंते स्वयमभ्यस्तविषये प्रमाणस्य स्वतः प्रामाण्यसिद्धेः सकलविप्रतिपत्तीनामपि प्रतिपत्तुरभावात् अन्यथा तस्य प्रमेये निस्संशयं प्रवृत्त्ययोगात् । तथानभ्यस्तविषये परतः प्रमाणस्य प्रामाण्यनिश्चयात् तन्निश्चयनिमित्तस्य च प्रमाणांतरस्याभ्यस्तविषयत्वे स्वतः प्रमाणत्वसिद्धेः अनवस्थापरस्पराश्रयणयोरनवकाशात् । तस्याप्यनभ्यस्तविषयत्वे परतः प्रमाणादभ्यस्तविषयात् स्वतःसिद्धप्रामाण्यात् प्रमाणत्वनिश्चयात् सुदूरमपि गत्वा कस्यचिदभ्यस्तविषयस्य प्रमाणस्यावश्यंभावित्वात् अन्यथा प्रमाणतदाभासव्यवस्थानुपपत्तेः तदभावव्यवस्थानुपपत्तिवत् । कुतः पुनः प्रतिपत्तुः क्वचिद्विषयेऽभ्यासः क्वचिदनभ्यासः स्यात् ? इति चेत् तत्प्रतिबंधकदशाविशेषविगमाभ्यां क्वचिदभ्यासानभ्यासौ स्यातां इति ब्रूमहे परिदृष्टकारणव्यभिचाराददृष्टस्य कारणस्य सिद्धेः तन्नः कर्म ज्ञानावरणवीर्यांतरायाख्यं सिद्धं तस्य क्षयोपशमात्कस्य चित् क्वचिदभ्यासज्ञानं तत्क्षयोपशमाभावे वा ऽनभ्यासज्ञानमिति सुव्यवस्थितं प्रमाणस्य प्रमाण्यं सुनिश्चितासंभवद्बाधकप्रमाणत्वात् स्वयमिष्टवस्तुवत् सर्वत्रेष्टसिद्धेस्तन्मात्रनिबंधनत्वादन्यथा सर्वस्य तत्त्वपरीक्षायामनधिकारादिति स्थितमेतत्—

प्रमाणादिष्टसंसिद्धिरन्यथातिप्रसंगतः ।
प्रामाण्यं तु स्वतःसिद्धमभ्यासात्परतोऽन्यथा ॥ १ ॥ इति

एवं प्रमाणलक्षणं व्यवसायात्मकं सम्यग्ज्ञानं परीक्षितं तत्प्रत्यक्षं परोक्षं चेति संक्षेपाद् द्वितयमेव व्यवतिष्ठते

सकलप्रमाणानामत्रैवांतर्भावादिति विभावनात्। परपरिकल्पितैकद्वित्र्यादिप्रमाणसंख्यानियमे तदघटनात्। तथाहि-येषां प्रत्यक्षमेकमेव प्रमाणं न तेषामनुमानादिप्रमाणांतरस्यांतर्भावः संभवति तद्विलक्षणत्वात्। प्रत्यक्षपूर्वकत्वादनुमानादेः प्रत्यक्षभावः इत्ययुक्तं प्रत्यक्षस्यापि क्वचिदनुमानपूर्वकत्वादनुमानादिष्वंतर्भावप्रसंगात्। यथैव हि धर्मिहेतुदृष्टांतप्रत्यक्षपूर्वकमनुमानं श्रोत्रप्रत्ययपूर्वकं च शाब्दं। सादृश्यानन्यथाभावनिषेध्याधारवस्तुग्राहि प्रत्यक्षपूर्वकाणि चोपमानार्थापत्त्यभावप्रमाणानि तथा-अनुमानेन कृशानुं निश्चित्य तत्र प्रवर्तमानस्य प्रत्यक्षमनुमानपूर्वकं रूपाद्रसं संप्रतिपद्य रसे रासनसमक्षवत्। शब्दाच्च मृष्टं पानकमवगम्य तत्र प्रवृत्तौ प्रत्यक्षं शाब्दपूर्वकं। क्षीरस्य संतर्पणशक्तिमर्थापत्त्याभिगम्य क्षीरे प्रवृत्तस्य तदात्मके प्रत्यक्षमर्थापत्तिपूर्वकं। गोसादृश्याद्गवयमवसाय तं व्यवहरतः प्रत्यक्षनुमानपूर्वकं। गृहे सर्पाभावमभावप्रमाणाद्विभाव्य प्रविशतः प्रत्यक्षमभावपूर्वकं प्रतीयते एव ततः प्रत्यक्षमेव गौणत्वादप्रमाणं न पुनरनुमानादिकं तस्यागौणत्वादिति शुष्के पतिष्यामि इति जातः पातः कर्दमे।

स्यादाकूतं न प्रत्यक्षं-अनुमानागमार्थापत्त्युपमानाभावसामग्रीपूर्वकं तदभावेऽपि चक्षुरादिसामग्रीमात्रात्तस्य प्रसूतेः प्रसिद्धत्वात्। तदभाव एव अभावनियमादिति तदप्यसत् लैंगिकादीनामपि प्रत्यक्षपूर्वकत्वाभावात्। लिंगशब्दानन्यथाभावसादृश्यप्रतियोगिस्मरणादिसामग्रीसद्भाव एव भावात्। सत्यपि प्रत्यक्षे स्वसामिग्र्यभावेऽनुमानादीनामभावात्। ततः किं बहुनोक्तेन प्रतिनियतसामग्रीप्रभवतया प्रमाणभेदमभिमन्यमाने प्रत्यक्षवदनुमानादीनामपि अगौणत्वमनुमंतव्यं प्रतिनियतस्वविषयव्यवस्थायां परापेक्षाविरहात्। यथैव हि प्रत्यक्षं साक्षात्स्वार्थे परिच्छित्तौ नानुमानाद्यपेक्षं तथानुमानमनुमेयनिर्णीतौ न प्रत्यक्षापेक्षमुत्प्रेक्षते प्रत्यक्षस्य धर्मिहेतुदृष्टांतग्रहणमात्रे पर्यवसितत्वात्। नापि शाब्दं शब्दप्रतिपाद्येऽर्थे प्रत्यक्षमनुमानं चापेक्षते तयोः शब्दश्रवणमात्रे शब्दार्थसंबंधानुमात्रे व्यापारात्। नत्वर्थापत्तिः प्रत्यक्षमनुमानमागमं चापेक्षते अभावोपमानवत्। तस्याश्च प्रत्यक्षादिप्रमाणप्रमितार्थाविनाभाविन्यदृष्टेऽर्थे निर्णयनिबंधनत्वात्। प्रत्यक्षादीनामर्थापत्त्युत्थापक पदार्थनिश्चयमात्रे व्यावृत्तत्वात्। नचोपमानं प्रत्यक्षादीन्यपेक्षते तस्योपमेयेऽर्थे निश्चयकारणे प्रत्यक्षादि निरपेक्षत्वात्। प्रत्यक्षादेः सादृश्यप्रतिपत्तिमात्रेऽनधिकारात्। नचाभावप्रमाणं प्रत्यक्षादिसापेक्षं निषेध्याधारवस्तुग्रहणे तस्य सामर्थ्यात्। परंपरयानुमानादीनां प्रत्यक्षपूर्वकत्वं प्रत्यक्षस्याप्यनुमानादिपूर्वकत्वं दुःशक्यं परिहर्तुं। कथं चायं प्रत्यक्षं प्रमाणं व्यवस्थापयेत् स्वत एवेति चेत् किमात्मसंबंधि सर्वसंबंधि वा? प्रथमकल्पनायां न सकलदेशकालपुरुषपरिषत्प्रत्यक्षं प्रमाणं सिद्ध्येत्। द्वितीयकल्पनायामपि न स्वप्रत्यक्षात्सकलपरप्रत्यक्षाणां प्रामाण्यं साधयितुमीशः तेषामनींद्रियत्वात् वादिप्रत्यक्षागोचरत्वात्। यदि पुनः सकलपुरुषप्रत्यक्षाणि स्वस्मिन् स्वस्मिन् विषये स्वतः प्रामाण्यमनुभवंति इति मतं तदा कुतस्तत्सिद्धिः?। विवादाध्यासितानि सकलदेशकालवर्तिपुरुषप्रत्यक्षाणि स्वतः प्रामाण्यमापद्यंते प्रत्यक्षत्वात् यद्यत्प्रत्यक्षं तत्तत्स्वतः प्रामाण्यमापद्यमानं सिद्धं यथा मत्प्रत्यक्षं प्रत्यक्षाणि च विवादाध्यासितानि तस्मात्स्वतः प्रामाण्यमापद्यंते सकलप्रत्यक्षाणां स्वतःप्रामण्यसाधने सिद्धमनुमानं प्रत्यक्षत्वेन स्वभावहेतुना प्रत्यक्षस्य स्वतः प्रामाण्यसाधनात्। शिंशुपात्वेन वनस्पतेः वृक्षत्वसाधनवत्। प्रतिपाद्यबुद्ध्या तथानुमानवचनाददोष इति चेत्? प्रतिपाद्यबुद्धिं प्रतिपद्य अप्रतिपद्य वा तयानुमानप्रयोगः स्यात्? न तावदप्रतिपद्य अतिप्रसंगात्। प्रतिपद्य तद्बुद्धितयानुमानप्रयोगे कुतस्तत्प्रतिपत्तिः? व्यवहारादिकार्यविशेषादिति चेत् सिद्धं कार्यात्कारणानुमानं धूमात्पावकानुमानवत्। यदि पुनर्लोकव्यवहारात् प्रतिपद्यत एवानुमानं लौकायतिकैः परलोकादेवानुमानस्य निराकरणात् तस्याभावादिति मतं तदापि कुतः परलोकाद्यभावप्रतिपत्तिः न तावत्प्रत्यक्षात् तस्य तदगोचरत्वात् नास्ति परलोकादिः अनुपलब्धेः खपुष्पवदिति तदभावसाधनेऽनुपलब्धिलक्षणमनुमानमायातं। तदुक्तं धर्मकीर्तिना—

प्रमाणेतरसामान्यस्थितेरन्यधियोगतेः।
प्रमाणांतरसद्भावः प्रतिषेधाच्च कस्यचित्॥ १॥ इति

ततः प्रत्यक्षमनुमानमिति द्वे एव प्रमाणे प्रमेयद्वैविध्यात्। न ह्याभ्यामर्थं परिच्छिद्य प्रवर्तमानोऽर्थक्रियायां विसंवाद्यत इति प्रमाणसंख्यानियमं सौगताः प्रतिपद्यंते तेषामागमोपमानादीनां प्रमाणभेदानामसंग्रह एव तेषां प्रत्यक्षानुमानयोरंतर्भावयितुमशक्तेः।

स्यान्मतिरेषा भवतां तदर्थस्य द्वैविध्यात् द्वयोरंतर्भावः स्यात्। द्विविधो ह्यर्थः प्रत्यक्षः परोक्षश्च। तत्र प्रत्यक्षविषयः साक्षात्क्रियमाणः प्रत्यक्षः। परोक्षः पुनरसाक्षात्परिच्छिद्यमानोऽनुमेयत्वादनुमानविषयः स हि पदार्थांतरात्साक्षात्क्रियमाणात् प्रतिपद्यते तच्च पदार्थांतरं तेन परोक्षेणार्थेन संबद्धं प्रत्याययितुं समर्थं नासंबद्धं गवादेरप्यश्वादेः प्रतीतिप्रसंगात्। संबद्धं चार्थांतरं लिंगमेव शब्दादि तज्जनितं च ज्ञानमनुमानमेव ततो न परोक्षेऽर्थेऽनुमानादन्यत्प्रमाणमस्ति शब्दोपमानादीनामपि तथानुमानत्वसिद्धेः। अन्यथा ततोऽर्थप्रतिपत्तौ अतिप्रसंगात् इति तदेतदपि न परीक्षाक्षमं प्रत्यक्षस्यापि तथानुमानत्वप्रसंगात्। प्रत्यक्षमपि हि स्वविषये संबद्धं तत्प्रत्यायनसमर्थं। तत्रासंबद्धस्यापि तत्प्रत्यायनसामर्थ्ये सर्वप्रत्यक्षं सर्वस्य नुः सर्वार्थप्रत्यायनसमर्थं स्यादिति कथमतिप्रसंगो न स्यात्?। यदि पुनः संबंधाधीनत्वाविशेषेऽपि प्रत्यक्षपरोक्षार्थप्रतिपत्तेः साक्षादसाक्षात्प्रतिभासभेदात् भेदोऽभ्युपगम्यते प्रमाणांतरत्वेन तदेंद्रियस्वसंवेदनमानसयोगिप्रत्यक्षाणामपि प्रमाणांतरत्वानुषंगः प्रतिभासभेदाविशेषात्। न हि यादृशः प्रतिभासो योगिप्रत्यक्षस्य विशदतमस्तादृशोऽक्षज्ञानस्यास्ति स्वसंवेदनस्य मनोविज्ञानस्य वा? यथाभूतश्च स्वसंवेदनप्रत्यक्षांतर्मुखो विशदतरः न तथाभूतोऽक्षज्ञानस्य। यादृशश्चाक्षज्ञानस्य बहिर्मुखः स्फुटः प्रतिभासो न तादृशो मनोविज्ञानस्येति कथं प्रमाणांतरता न भवेत्? अथ प्रतिभासविशेषेऽपि तच्चतुर्विधमपि प्रत्यक्षमेव न प्रमाणांतरं तर्हि प्रत्यक्षानुमानयोः प्रतिभासभेदेपि स्वविषयसंबंधाविशेषात्त्व प्रमाणांतरत्वं माभूत्। यदि पुनः स्वविषयसंबद्धत्वाविशेषेऽपि प्रत्यक्षानुमानयोः सामग्रीभेदात् प्रमाणांतरत्वमुररीक्रियते तदा शाब्दोपमानादीनामपि तत एव प्रमाणांतरत्वमुररीक्रियतां। यथैव हि अक्षादिसामग्रीतः प्रत्यक्षं, लिंगसामग्रीतोऽनुमानं प्रभवतीति तयोः सामिग्रीभेदः। तथागमः शब्दसामिग्रीतः प्रभवति। उपमानं सादृश्यसामग्रीतः। अर्थापत्तिश्च परोक्षार्थाविनाभूतार्थमात्रसामग्र्याः। प्रतिषेध्याधारवस्तुग्रहणप्रतिषेध्यस्मरणसामग्र्याश्चाभाव इति प्रसिद्धः शाब्दादीनामपि सामग्रीभेदः। तत एवाक्षज्ञानादिप्रत्यक्षचतुष्टयस्य प्रभेदप्रसिद्धेः नहि तस्यार्थभेदोऽस्ति साक्षात्क्रियमाणस्यार्थस्याविशेषात् तद्वल्लिंगशब्दादिसामग्रीभेदात्परोक्षार्थविषयत्वाविशेषेऽप्यनुमानागमादीनां भेदप्रसिद्धिरिति नानुमानेंऽतर्भावः संभवति। तथा साध्यसाधनसंबंधव्याप्तिप्रतिपत्तौ न प्रत्यक्षं समर्थं। यावान् कश्चिद्धूमः स सर्वः कालांतरे देशांतरे च पावकजन्मा, अन्यजन्मा वा न भवति इत्येतावतो व्यापारान् कर्तुमसमर्थत्वात्। सन्निहितार्थमात्राद्युत्पत्तेरविचारकत्वात् योगिप्रत्यक्षं तत्र समर्थमिति चेन् न देशकालयोगिप्रत्यक्षद्वयानतिक्रमात्। देशयोगिनः प्रत्यक्षं व्याप्तिप्रतिपत्तौ समर्थमित्ययुक्तं तत्रानुमानवैयर्थ्यात्। न हि योगिप्रत्यक्षेण साक्षात्कृतेषु साध्यसाधनविशेषेषु अशेषेषु फलवदनुमानं। अथ सकलयोगिप्रत्यक्षेण व्याप्तिप्रतिपत्तावदोष इति चेन्न उक्तदोषस्यात्रापि तदवस्थत्वात्। परार्थफलवदनुमानमिति चेत्? न तस्य स्वार्थानुमानपूर्वकत्वात्। स्वार्थानुमानाभावे च योगिनः कथं परार्थानुमानं नाम। यदि पुनः सकलयोगिनः परानुग्रहाय प्रवृत्तत्वात् परानुग्रहस्य च शब्दात्मकपरार्थानुमानमंतरेण कर्तुमशक्तेः परार्थानुमानसिद्धिः, तस्याश्च स्वार्थानुमानासंभवेऽनुत्पद्यमानत्वात् स्वार्थानुमानसिद्धिरपि परप्रतिपादनप्रवृत्तेरस्य संभाव्यत एवेति मतं तदा स योगी स्वार्थानुमाने चतुरार्यसत्यानि निश्चित्य परार्थानुमानेन परं प्रतिपादयन् ग्रहीतव्याप्तिकमगृहीतव्याप्तिकं वा प्रतिपादयेत्? यदि गृहीतव्याप्तिकं तदा कुतस्तेन गृहीता व्याप्तिः? न तावदिंद्रियस्वसंवेदनमनोविज्ञानैस्तेषां तदविषयत्वात्। योगिप्रत्यक्षेण गृह्यते व्याप्तिः परेण तस्यापि देशयोगित्वात् इति चेत् तर्हि यावत्सु साध्यसाधनभेदेषु योगिप्रत्यक्षं देशयोगिनस्तावत्सु व्यर्थमनुमानं स्पष्टं प्रतिभातेष्वपि अनुमाने सकलयोगिनः सर्वत्रानुमानप्रसंगात्। समारोपव्यवच्छेदार्थमपि न तत्रानुमानं योगिप्रत्यक्षविषये समारोपानवकाशात् सुगतप्रत्यक्षविषयवत्। ततो न गृहीतव्याप्तिकं परं सकलयोगी प्रतिपादयितुमर्हति। नाप्यगृहीतव्याप्तिकं

अतिप्रसंगात् इति परप्रतिपादनानुपपत्तिः। तस्यां च न परार्थानुमानं संभवति तदसंभवे च न स्वार्थानुमानमवतिष्ठते सकलयोगिनस्तदव्यवस्थाने च न सकलयोगिप्रत्यक्षेण व्याप्तिग्रहणं युक्तिमधिवसति। प्रत्यक्षानुपलंभाभ्यां साध्यसाधनयोर्व्याप्तिप्रतिपत्तिरित्यप्यनेनापास्तं प्रत्यक्षेण व्याप्तिप्रतिपत्तिनिराकृतौ प्रत्यक्षांतरलक्षणेनानुपलंभेन तत्प्रतिपत्तिनिराकृतिसिद्धेः।

योप्याह कारणानुपलंभात् कार्यकारणभावव्याप्तिः। व्यापकानुपलंभाद् व्याप्यव्यापकभावः साकल्येन प्रतिपद्यत इत्यनुमानसिद्धा साध्यसाधनव्याप्तिः। तथाहि यावान् कश्चिद्धूमः स सर्वोप्यग्निजन्मा महाह्रदादिष्वग्नेरनुपलंभाद्धूमाभावसिद्धेरिति कारणानुपलंभानुमानं। यावती शिंशपा सा सर्वा वृक्षस्वभावा। वृक्षानुपलब्धौ शिंशपात्वाभावसिद्धे इति व्यापकानुपलंभो लिंगं. एतावता साकल्येन साध्यसाधनव्याप्तिसिद्धिः इति सोऽपि न युक्तवादी तथानवस्थानुषंगात्। कारणानुपलंभव्यापकानुपलंभयोरपि हि स्वसाध्येन व्याप्तिर्न प्रत्यक्षतः सिद्ध्येत् पूर्वोदितदोषासक्तेः। परस्मादनुमानात्तत्सिद्धौ कथमनवस्था न स्यात्? प्रत्यक्षानुपलंभपृष्ठभाविनो विकल्पान् स्वयमप्रमाणकात् साध्यसाधनव्याप्तिसिद्धौ किमकारणं प्रत्यक्षानुमानप्रमाणपोषणं क्रियते? मिथ्याज्ञानादेव प्रत्यक्षानुमेयार्थसिद्धेर्व्याप्तिसिद्धिवत्। तस्माद्यथा प्रत्यक्षं प्रमाणमिच्छता सामस्त्येन तत्प्रामाण्यसाधनमनुमानमंतरेण नोपपद्यते इत्यनुमानमिष्टं। तथा साध्यसाधनव्याप्तिज्ञानप्रमाणमंतरेण नानुमानोत्थानमस्ति इति तदप्यनुज्ञातव्यं तच्चोहाख्यमविसंवादकं प्रमाणांतरं सिद्धमिति, न प्रत्यक्षानुमाने एव प्रमाणे इति प्रमाणसंख्यानियमो व्यवतिष्ठते। एतेन वैशेषिकप्रमाणसंख्यानियमो प्रत्याख्यातः।

स्यान्मतं साध्यसाधनसामान्ययोः क्वचिद्व्यक्तिविशेषे प्रत्यक्षत एव संबंधसिद्धेर्न प्रमाणांतरमन्वेषणीयं यावान् कश्चिद्धूमः स सर्वोऽपि अग्निजन्मानग्निजन्मा वा न भवति इत्यूहापोहविकल्पज्ञानस्य प्रमाणांतरत्वं संबंधग्राहिसमक्षप्रमाणफलत्वात्। क्वचिदनुमितानुमाने साध्यसाधने आदित्यगमनशक्तिरस्ति गतिमत्त्वात्। आदित्यो गतिमान् देशाद्देशांतरप्राप्तेः देवदत्तवत् संबंधबोधनिबंधनानुमानं फलवत् ततः प्रत्यक्षमनुमानमिति प्रमाणद्वयसंख्यानियमः कणचरमतानुसारिणां व्यवतिष्ठत एवेति तदप्यसारं सविकल्पकेनापि प्रत्यक्षेण साकल्येन साध्यसाधनसंबंधग्रहीतुमशक्तेः। साध्यं हि किमग्निसामान्यं, अग्निविशेषोग्निसामान्यविशेषो वा? न तावदग्निसामान्यं सिद्धसाध्यतापत्तेः। नाप्यग्निविशेषस्तस्यानन्वयात्। वन्हिसामान्यविशेषस्य हि साध्यत्वे तेन धूमस्य संबंधः सकलदेशकालव्याप्यध्यक्षतः कथं सिद्ध्येत्? तथा तत्संबधासिद्धौ च यत्र यत्र यदा यदा धूमोपलंभः तत्र तत्र तदा तदाऽग्निसामान्यविशेषविषयमनुमानं नोदयमासादयेत्। न ह्यन्यथा संबंधग्रहणमन्यथानुमानोत्थानं नानातिप्रसंगात् ततः संबंधज्ञानं प्रमाणांतरमेव प्रत्यक्षानुमानयोस्तदविषयत्वात्। यच्चोक्तं प्रत्यक्षफलत्वादूहापोहविज्ञानस्याप्रमाणत्वमिति तदप्यसम्यक् विशेषणज्ञानफलत्वाद्विशेष्यज्ञानस्याप्रमाणत्वानुषंगात् हानोपादानोपेक्षाबुद्धिफलकारणत्वाद्विशेष्यज्ञानस्य प्रमाणत्वे तत एवोहापोहविज्ञानस्य प्रमाणत्वमस्तु सर्वथा विशेषाभावात्। प्रमाणविषयत्वपरिशोधकत्वान्नोहः प्रमाणमित्यपि वार्तं प्रमाणविषयस्याप्रमाणेन परिशोधनविरोधात्। तथा तर्कः प्रमाणं प्रमाणविषयपरिशोधकत्वात् यस्तु न प्रमाणं स न प्रमाणविषयपरिशोधको दृष्टो यथा प्रमेयोऽर्थः प्रमाणविषयपरिशोधकश्च तर्कस्तस्मात्प्रमाणमिति केवलव्यतिरेकिणानुमानेनान्यथानुपपत्तिनियमनिश्चयलक्षणेन तर्कस्य प्रमाणत्वसिद्धेः, न वैशेषिकाणां प्रमाणद्वयसंख्यानियमः सिद्ध्येत्। एतेन द्वित्रिचतुःपंचषट्प्रमाणवादिनां प्रमाणसंख्यानियमः प्रतिध्वस्तः संख्यानां प्रत्यक्षानुमानाभ्यामिवागमादपि साध्यसाधनसंबंधासिद्धेः तर्कस्य तत्सिद्धिनिबंधनस्य प्रमाणांतरत्वोपपत्तेः। नैयायिकानां च प्रत्यक्षानुमानागमैरिवोपमानेनापि लिंगलिंगिग्रहणासंभवात्। प्रभाकराणां च प्रत्यक्षानुमानोपमानागमैरिव अर्थापत्त्यापि हेतुहेतुमत्संबंधसिद्धेरसंभवात्। भट्टमतानुसारिणामपि प्रत्यक्षानुमानोपमानागमार्थापत्तिभिरिव अभावप्रमाणेनापि व्याप्तिनिश्चयानुपपत्तेस्तन्निश्चयनिबंधनस्योहज्ञानस्य प्रमाणांतरस्य सिद्धिरवश्यंभाविनी दुःशक्या निराकर्तुं।

ननूहः स्वविषये संबद्धोऽसंबद्धो वा न तावदसंबद्धस्तं प्रत्याययितुमीशोऽतिप्रसंगात्। संबद्धश्चेत् कुतस्तत्प्रतिपत्तिः? न तावत्प्रत्यक्षात् तस्य तदविषयत्वात्। नाप्यनुमानादनवस्थानुषंगात्। यदि पुनरुहांतरात्त-

त्संबंधसिद्धिः तदोहांतरस्यापि स्वविषयसंबंधसिद्धिपूर्वकत्वात् तस्याश्चापरोहनिबंधनत्वात् सैवानवस्था। प्रमाणांतरात्तत्सिद्धौ च स एव पर्यनुयोगः परापरप्रमाणांतरपरिकल्पनानुषंगात् केयं प्रमाणसंख्या व्यवतिष्ठेतेति केचित् तेषामपि प्रत्यक्षं स्वविषयं प्रतिबोधयत् तत्संबंधश्च नानुमानादेः सिद्ध्यति तस्य तदविषयत्वात्। प्रत्यक्षांतरात्तत्सिद्धौ तत्रापि प्रकृतपर्यनुयोगानिवृत्तेः कथमनवस्था न स्यात् यतः प्रत्यक्षं प्रमाणमभ्युपगमनीयमिति प्रतिपद्यामहे।

स्यान्मतिरेषा प्रत्यक्षं स्वविषयसंबंधाववोधनिबंधनं प्रामाण्यमात्मसात्कुरुते तस्य स्वविषये स्वयोग्यताबलादेव प्रमाणत्वव्यवस्थितेः अन्यथा क्वचिदपूर्वार्थग्राहिणः प्रत्यक्षस्याप्रमाणत्वानुषंगात् इति सापि न साधीयसी तथोहस्यापि स्वयोग्यताविशेषसामर्थ्यादेव स्वविषयप्रत्यायनसिद्धेर्भवदुद्भावितदूषणवैयर्थ्यव्यवस्थानात्। योग्यताविशेषः पुनः प्रत्यक्षस्येव स्वविषयज्ञानावरणवीर्यांतरायक्षयोपशमविशेष एवोहस्यापि प्रतिपद्यते सकलबाधकवैधुर्यात्। यथा च प्रत्यक्षस्योत्पत्तौ मनोऽक्षादिसामिग्री योग्यतायाः सहकारिणी बहिरंगनिमित्तत्वात् तथोहस्यापि समुद्भूतौ भूयः प्रत्यक्षानुपलंभसामिग्रीबहिरंगनिमित्तभूतानुमन्यते तदन्वयव्यतिरेकानुविधायित्वादूहस्येति सर्वनिरवद्यसिद्धं चानुमानप्रमाणान्यथानुपपत्त्या तर्कस्य प्रमाणत्वे–प्रत्यभिज्ञानं प्रमाणं तर्कप्रमाणत्वान्यथानुपपत्तेः न ह्यप्रत्यभिज्ञाने विषये तर्कः प्रवर्तते अतिप्रसंगात्। नच गृहीतग्रहणात्प्रत्यभिज्ञानस्याप्रमाणत्वं शंकनीयं तद्विषयस्यास्मर्यमाणदृश्यमानपर्यायव्याप्येकद्रव्यस्य स्मरणप्रत्यक्षागोचरत्वात् अपूर्वार्थग्राहित्वासिद्धेः। नचेदं प्रत्यक्षेऽतर्भवति प्रत्यक्षस्य वर्तमानपर्यायविषयत्वात्। नाप्यनुमाने लिंगानपेक्षत्वात्। न शाब्दे शब्दनिरपेक्षत्वात्। नोपमाने सादृश्यमंतरेणापि भावात्। नार्थापत्तौ प्रत्यक्षादिप्रमाणषट्कविज्ञातार्थप्रतिपत्तिमंतरेणापि प्रादुर्भावात्। नाभावे निषेध्याधारवस्तुग्रहणेन निषेध्यस्मरणेन च विनैवोत्पादादिति सर्वेषामेकद्वित्रिचतुःपंचषट्प्रमाणसंख्यानियमं विघटयति। एतेन स्मृतिः प्रमाणांतरमुक्तं तस्याश्च प्रत्यक्षादिष्वंतर्भावयितुमशक्तेः। न चासावप्रमाणमेव संवादकत्वात् कथंचिदपूर्वार्थग्राहित्वात् बाधावर्जितत्वाच्चानुमानवदिति। येषां तु स्मरणमप्रमाणं तेषां पूर्वप्रतिपन्नस्य साध्यसाधनसंबंधस्य वाच्यवाचकसंबंधस्य च स्मरणसामर्थ्यादव्यवस्थितेः कुतोऽनुमानं शाब्दं वा प्रमाणं सिद्ध्येत्। तदप्रसिद्धौ च न संवादकत्वासंवादकत्वाभ्यां प्रत्यक्षतदाभासव्यवस्थितिरिति सकलप्रमाणविलोपापत्तिः ततः प्रमाणव्यवस्थामभ्यनुजानता स्मृतिरपि प्रमाणयितव्या इति न परेषां संख्यानियमः सिद्ध्येत्। स्याद्वादिनां तु संक्षेपात्प्रत्यक्षपरोक्षविकल्पात् प्रमाणद्वयं सिद्धत्येव तत्र सकलप्रमाणभेदानां संग्रहादिति सूक्तं।

किं पुनः प्रत्यक्षमित्युच्यते विशदज्ञानात्मकं प्रत्यक्षं प्रत्यक्षत्वात् यत्तु न विशदज्ञानात्मकं तन्न प्रत्यक्षं यथानुमानादिज्ञानं प्रत्यक्षं च विवादाध्यासितं तस्माद्विशदज्ञानात्मकं। न तावदत्राप्रसिद्धो धर्मी प्रत्यक्षधर्मिणि केवलप्रत्यक्षवादिनामविप्रतिपत्तेः। शून्यसंवेदनाद्वैतवादिनामपि स्वरूपप्रतिभासनस्य प्रत्यक्षस्याभीष्टेः। प्रत्यक्षत्वस्य हेतोरसिद्धतापि अनेन समुत्सारिता प्रत्यक्षमिच्छद्भिः प्रत्यक्षत्वस्य तद्धर्मस्य स्वयमिष्टत्वात्। प्रतिज्ञार्थैकदेशासिद्धत्वं साधनस्य स्यादिति चेत् का पुनः प्रतिज्ञा तदेकदेशो वा यस्यासिद्धत्वं शंक्येत? धर्मधर्मिसमुदायः प्रतिज्ञा तदेकदेशो धर्मी हेतुर्यथा नश्वरः शब्दो शब्दत्वादिति तथा साध्यधर्मः प्रतिज्ञैकदेशो यथा नश्वरः शब्दो नश्वरत्वात् सोयं द्विविधो प्रतिज्ञार्थैकदेशासिद्धो हेतुः स्यादिति चेत्? न धर्मिणो हेतुत्वे कस्य चिदसिद्धतानुपपत्तेः। यथैव हि प्रत्यक्षप्रयोगकाले वादिप्रतिवादिप्रसिद्धो धर्मी तथा तस्य हेतुत्ववचनेऽपि नासिद्धिः। साध्यधर्मस्तु हेतुत्वेनोपादीयमानो न प्रतिज्ञातार्थैकदेशत्वेनासिद्धो धर्मिणोऽप्यसिद्धिप्रसंगात्। किं तर्हि? स्वरूपेण वासिद्ध इति न प्रतिज्ञार्थैकदेशासिद्धो नाम हेत्वाभासः संभवतीति कथं प्रकृतहेतौ प्रतिज्ञार्थैकदेशासिद्धत्वं समुद्भावयन् भावितानुमानस्वभावः?। धर्मिणो हेतुत्वेऽनन्वयप्रसंग इति चेत् न विशेषं धर्मिणं कृत्वा सामान्यं हेतुं ब्रुवतां दोषासंभवात्। प्रत्यक्षं हि विशेषरूपं धर्मी प्रत्यक्षसामान्यं हेतुः स कथमनन्वयः स्यात् सकलप्रत्यक्षविशेषस्य व्यापित्वात्। दृष्टांते क्वचिदभावात् अनन्वय इति चेत् न सर्वे भावाः क्षणिकाः सत्त्वात् इत्यादेरपि हेतोरनन्वयत्वप्रसक्तेः।

अथास्य दृष्टांतेन अन्वयस्यापि साध्यधर्मिणि सर्वत्रान्वयासिद्धेर्विपक्षे बाधकप्रमाणसद्भावाच्च निर्दोषतानुमन्यते तत एव प्रत्यक्षत्वस्य हेतोर्निर्दोषतास्तु सर्वथा विशेषाभावात् केवलव्यतिरेकिणोऽपि हेतोरविनाभावनिर्णयात् साध्यसाधनसामर्थ्यान्न कश्चिदुपालंभस्ततो निरवद्योऽयं हेतुः प्रत्यक्षस्य विशदज्ञानात्मकत्वं साधयत्येव। नचैतदसंभवि साध्यमात्मानं प्रतिनियतस्य ज्ञानस्य प्रत्यक्षशब्दवाच्यस्यार्थसाक्षात्कारिणः सर्वस्य कार्त्स्न्येन एकदेशेन वा वैशद्यसिद्धेर्बाधकाभावात्। अक्ष्णोति व्याप्नोति जानातीत्यक्षो हि—आत्मानमेव क्षीणावरणं क्षीणोपशांतावरणं वा प्रतिनियतस्य ज्ञानस्य प्रत्यक्षशब्दवाच्यस्य कथंचिदपि वैशद्यं संभाव्यमिति सूक्तं विशदज्ञानात्मकं प्रत्यक्षं।

तत्त्रिविधं—इंद्रियानिंद्रियातींद्रियप्रत्यक्षविकल्पनात्। तत्रेंद्रियप्रत्यक्षं सांव्यवहारिकं देशतोविशदत्वात्। तद्वदनिंद्रियप्रत्यक्षं तस्यांतर्मुखाकारस्य कथं चिद्वैशद्यसिद्धेः। अतींद्रियप्रत्यक्षं तु द्विविधं विकलप्रत्यक्षं सकलप्रत्यक्षं चेति। विकलप्रत्यक्षमपि द्विविधं—अवधिज्ञानं मनःपर्ययज्ञानं चेति सकलप्रत्यक्षं तु केवलज्ञानं तदेतत्त्रितयमपि मुख्यं प्रत्यक्षं मनोऽक्षानपेक्षत्वात् अतीतव्यभिचारित्वात् साकारवस्तुग्राहित्वात् सर्वथा स्वविषयषु वैशद्याच्च। तथा चोक्तं तत्त्वार्थवार्तिककारैः।

**इंद्रियानिंद्रियानपेक्षमतीतव्यभिचारं साकारग्रहणं प्रत्यक्षमिति**

तत्रेंद्रियानिंद्रियानपेक्षमिति वचनात् सांव्यवहारिकस्येंद्रियप्रत्यक्षस्यानिंद्रियस्य च देशतो विशदस्य व्यवच्छेदसिद्धेः। अतीतव्यभिचारमिति वचनात् विभंगज्ञानस्यावधिप्रत्यक्षाभासस्य निवृत्तेः। साकारग्रहणमिति प्रतिपादनात् निराकारग्रहणस्य दर्शनस्य प्रत्यक्षत्वव्यावर्तनात्।

सूक्तं मुख्यं प्रत्यक्षत्रयं ननु स्वसंवेदनप्रत्यक्षं चतुर्थं स्यादिति न मंतव्यं तस्य सकलज्ञानसाधरणस्वरूपत्वात्। यथैव हींद्रियप्रत्यक्षस्य स्वरूपसंवेदनमिंद्रियप्रत्यक्षमेव अन्यथा तस्य स्वपरस्वरूपसंवेदकत्वविरोधात् संवेदनद्वयप्रसंगाच्च। तथानींद्रियप्रत्यक्षस्य मानसस्य स्वरूपसंवेदनमनिंद्रियप्रत्यक्षमेव तत एव तद्वदतींद्रियप्रत्यक्षत्रितयमेवेति न ततोऽर्थांतरं स्वसंवेदनप्रत्यक्षं। एतेन श्रुतज्ञानस्य स्वरूपसंवेदनमनिंद्रियप्रत्यक्षमुक्तं प्रतिपत्तव्यं तस्यानिंद्रियनिमित्तत्वात् विभ्रमज्ञानस्वरूपसंवेदनवत्। तथा च सकलं ज्ञानं स्वरूपसंवेदनापेक्षया प्रमाणं सिद्धं भावप्रमेयापेक्षायां प्रमाणाभासनिन्हवः।

किं पुनरिंद्रियप्रत्यक्षं ? इंद्रियप्रधान्यादिंद्रियबलाधानादुपजायमानं मतिज्ञानं—

**तदिंद्रियानिंद्रियनिमित्तं।**

इति वचनात्। तच्चतुर्विधं—अवग्रहेहावायधारणाविकल्पात्। तत्र **विषयविषयिसन्निपातानंतरमाद्यग्रहणमवग्रहः। तद्गृहीतवस्तुविशेषकांक्षणमीहा। भवितव्यताप्रत्ययरूपाच्चदीहितविशेषनिश्चयोऽवायः। सावधारणं ज्ञानं कालांतराविस्मरणकारणं धारणाज्ञानं।** तदेतच्चतुष्टयमपि अक्षव्यापारापेक्षं अक्षव्यापाराभावे तदनुद्भवनात्। मनोऽपेक्षं च प्रतिहतमनसस्तदनुत्पत्तेः। तत एवेंद्रियप्रत्यक्षं देशतो विशदमविसंवादकं प्रतिपत्तव्यं स्पर्शनादीन्द्रियनिमित्तस्य बहुबहुविधक्षिप्रानिसृतानुक्तध्रुवेषु तदितरेष्वर्थेषु वर्तमानस्य प्रतींद्रियमष्टचत्वारिंशद्भेदस्य व्यंजनावग्रहभेदैरष्टचत्वारिंशता सहितस्य संख्याष्टाशीत्युत्तरद्विशती प्रतिपत्तव्या। तथा अनिंद्रियप्रत्यक्षं बह्वादिद्वादशप्रकारार्थविषयमवग्रहादिविकल्पमष्टचत्वारिंशत्संख्यं प्रतिपत्तव्यं। यत्पुनरतींद्रियप्रत्यक्षविकल्पमत्रावधिज्ञानं तत् षड्विधं अनुगामि-अननुगामि-वर्धमान-हीयमान-अवस्थित-अनवस्थितविकल्पात्। सप्रतिपाताप्रतिपातयोरत्रैवांतर्भावात्। संक्षेपतस्तु त्रिविधं देशावधि-परमावधि-सर्वावधिभेदात्। तत्र देशावधिज्ञानं षड्विकल्पमपि संभवति परमावधिज्ञानं तु संयमविशेषैकार्थसमवायिभवांतरापेक्षयाननुगामि प्रतिपातं च प्रत्येयं। तद्भवापेक्षया च तदनुगाम्येव नाननुगामि। वर्धमानमेव न हीयमानं। अवस्थितमेव नानवस्थितं। अप्रतिपातमेव नप्रतिपातं तथाविधविशुद्धिनिबंधनत्वात्। एतेन सर्वावधिज्ञानं व्याख्यातं। केवलं तद्वर्धमानमपि न भवति परमप्रकर्षप्राप्तत्वात् सकलावधिज्ञानावरणवीर्यांतरायक्षयोपशमवशात्प्रसूतत्वात्। अतिसंक्षेपतस्तु द्विविधमवधिज्ञानं भवप्रत्ययं

गुणप्रत्ययं चेति। तत्र भवप्रत्ययं बहिरंगदेवभवनारकभवप्रत्ययनिमित्तत्वात्। तद्भावे भावात् तदभावेऽभावात् तत्तु देशावधिज्ञानमेव। गुणप्रत्ययं तु सम्यग्दर्शनगुणनिमित्तमसंयतसम्यग्दृष्टेः। संयमासंयमगुणहेतुकं संयतासंयतस्य। संयमगुणनिबंधनं संयतस्य। सत्यंतरंगहेतौ बहिरंगस्य गुणप्रत्ययस्य भावे भावात्। तदभावे चाभावात्। तथा मनःपर्ययज्ञानं विकलमतींद्रियप्रत्यक्षं द्वेधा ऋजुमतिविकल्पात्। तत्रर्जुमतिमनःपर्ययज्ञानं निर्वर्तितप्रगुणवाक्कायमनस्कृतार्थस्य परमनोगतस्य परिच्छेदकत्वात्त्रिविधं। विपुलमतिमनःपर्ययज्ञानं तु निर्वर्तितानिर्वर्तितप्रगुणाप्रगुणवाक्कायमनस्कृतार्थस्य परमनसि स्थितस्य स्फुटतरमवबोधकत्वात् षट्प्रकारं, तथाविधमनःपर्ययज्ञानावरणवीर्यांतरायक्षयोपशमविशेषबलात् प्रादुर्भूतत्वात्। सकलमतींद्रियप्रत्यक्षं केवलज्ञानं सकलमोहक्षयात् सकलज्ञानदर्शनावरणवीर्यांतरायक्षयाच्च समुद्भूतत्वात् सकलवैशद्यसद्भावात् सकलविषयत्वाच्च। तद्वान् कश्चित्पुरुषविशेषो भवत्येव सुनिर्णीतासंभवद्बाधकप्रमाणत्वात्। तथा शास्त्रज्ञानेन तद्वानुभयवादिप्रसिद्धः। नचात्रासिद्धं साधनं सर्वातींद्रियप्रत्यक्षवतः पुरुषस्य प्रत्यक्षादिप्रमाणैरबाध्यमानस्य सकलदेशकालपुरुषपरिषदपेक्षयापि सिद्धत्वात् सुखादिसंवेदनस्यापि तथैव प्रमाणत्वोपपत्तेः। अन्यथा कस्यचिदिष्टसिद्धेरसंभवात्। इति संक्षेपतो विशदं ज्ञानं सांव्यवहारिकं मुख्यं च प्ररूपितं विस्तरतस्तु तत्त्वार्थालंकारे परीक्षितमिह द्रष्टव्यं।

संप्रति परोक्षमुच्यते—परोक्षमविशदज्ञानात्मकं परोक्षत्वात् यन्नाविशदज्ञानात्मकं तन्न परोक्षं यथातींद्रियप्रत्यक्षं परोक्षं च विवादाध्यासितं ज्ञानं तस्मादविशदज्ञानात्मकं। नचास्य परोक्षत्वमसिद्धं—अक्षेभ्यः परावृत्तत्वात्। **तथोपात्तानुपात्तपरप्रत्ययापेक्षं परोक्षमिति** तत्त्वार्थवार्तिककारैरभिधानात्। उपात्तो हि प्रत्ययः कर्मवशादात्मना करणत्वेन गृहीतः स्पर्शनादिः। ततोऽन्यः पुनर्बहिरंगः सहकारी प्रत्ययोऽनुपात्तः शब्दलिंगादिः तदपेक्षं ज्ञानं परोक्षमित्यभिधीयते। तदपि संक्षेपतो द्वेधा मतिज्ञानं श्रुतज्ञानं चेति **आद्ये परोक्षं** इति वचनात्। मतिश्रुतावधिमनःपर्ययकेवलानि हि ज्ञानं। तत्राद्ये मतिश्रुते सूत्रपाठापेक्षया लक्ष्येते ते च परापेक्षतया परोक्षे प्रतिपादिते। परानपेक्षाण्यवधिमनःपर्ययकेवलानि यथा प्रत्यक्षाणीति। तत्रावग्रहादिधारणापर्यंतं मतिज्ञानमपि देशतोवैशद्यसद्भावात्सांव्यवहारिकं, इंद्रियप्रत्यक्षमतींद्रियप्रत्यक्षं चाभिधीयमानं न विरुध्यते ततः शेषस्य मतिज्ञानस्य स्मृतिसंज्ञाचिंताभिनिबोधलक्षणस्य श्रुतस्य च परोक्षत्वव्यवस्थितेः। तदुक्तमकलंकदेवैः—

प्रत्यक्षं विशदं ज्ञानं मुख्यसंव्यवहारतः।
परोक्षं शेषविज्ञानं प्रमाणमिति संग्रहः॥ १॥

तत्र तदित्याकारानुभूतार्थविषया स्मृतिः आनिंद्रियप्रत्यक्षं विशदत्वात् सुखादिसंवेदनवदित्येके[1] तदसत्। तस्मात्तत्र वैशद्यासिद्धेः पुनर्भावयतो वैशद्यप्रतीतेर्भावनाज्ञानत्वात् तस्य च भ्रांतत्वात् स्वप्नज्ञानवत्। पूर्वानुभूतेऽतीतेऽर्थे वैशद्यासंभवात् स्मृतिः परोक्षमेव श्रुतानुमितस्मृतिवत् इत्यपरे[2] तदित्युल्लेखस्य सर्वस्यां स्मृतौ सद्भावात्। सा च प्रमाणमविसंवादकत्वात् प्रत्यक्षवत् यत्र तु विसंवादः सा स्मृत्याभासा प्रत्यक्षाभासवत्। तथा तदेवेदमित्याकारं ज्ञानं संज्ञा प्रत्यभिज्ञा तादृशमेवेदमित्याकारं वा विज्ञानं संज्ञोच्यते। तस्या एकत्वसादृश्यविषयत्वाद्वैविध्योपपत्तेः। द्विविधं हि प्रत्यभिज्ञानं तदेवेदमित्येकत्वनिबंधनं। तादृशमेवेदमिति सादृश्यनिबंधनं च। ननु च तदेवेत्यतीतप्रतिभासस्य स्मरणरूपत्वात् इदमिति संवेदनस्य प्रत्यक्षरूपत्वात् संवेदनद्वितयमेवैतत् तादृशमेवेदमिति स्मरणप्रत्यक्षसंवेदनद्वितयवत् ततो नैकं ज्ञानं प्रत्यभिज्ञाख्यं प्रतिपद्यमानं संभवतीति कश्चित् सोऽपि न संवेदनविशेषविपश्चित् स्मरणप्रत्यक्षजन्यस्य पूर्वोत्तरविवर्तवर्त्यैकद्रव्यविषयस्य प्रत्यभिज्ञानस्यैकस्य सुप्रतीतत्वात्। न हि तदिति स्मरणं तथाविधद्रव्यव्यवसायात्मकं तस्यातीतविवर्तमात्रगोचरत्वात्। नापीदमिति संवेदनं तस्य वर्तमानविवर्तमात्रविषयत्वात्। ताभ्यामुपजन्यं तु सकलज्ञानं तदनुवादपुरस्सरं द्रव्यं प्रत्यवमृशत्। ततो-

---

१ मीमांसकाः। २ स्याद्वादिनः।

ऽन्येदेव प्रत्यभिज्ञानमेकत्वविषयं तदपह्नवे क्वचिदेकान्वयाव्यवस्थानात् संतानैकत्वसिद्धिरपि न स्यात्। नचै-तदगृहीतग्रहणादप्रमाणमिति शंकनीयं तस्य कथंचिदपूर्वार्थत्वात्। न हि तद्विषयभूतमेकं द्रव्यं स्मृति-प्रत्यक्षग्राह्यं येन तत्र प्रवर्तमानं प्रत्यभिज्ञानं गृहीतग्राहि मन्येत तद्गृहीतातीतवर्तमानविवर्ततादात्म्यात्। द्रव्यस्य कथंचिदपूर्वार्थत्वेऽपि प्रत्यभिज्ञानस्य तद्विषयस्य नाप्रमाणत्वं लैंगिकादेरप्यप्रमाणत्वप्रसंगात् तस्यापि सर्वथैवापूर्वार्थत्वासिद्धेः। संबंधग्राहिविज्ञानाविषयात् साध्यादिसामान्यात् कथंचिदभिन्नत्वानुमेयस्य देश-कालविशिष्टस्य तद्विषयत्वात् कथंचिदपूर्वार्थत्वसिद्धेः बाधकप्रमाणान्न प्रमाणं प्रत्यभिज्ञानमिति चायुक्तं तद्बा-धकस्यासंभवात्। नहि प्रत्यक्षं तद्बाधकं तस्य तद्विषये प्रवृत्त्यसंभवात्। साधकत्ववद्बाधकत्वविरोधात्। यथा हि यद्यत्र विषये न प्रवर्तते न तत्तस्य साधकं बाधकं वा यथा रूपज्ञानस्य रसज्ञानं न प्रवर्तते च प्रत्यभिज्ञा-नस्य विषये प्रत्यक्षं तस्मान्न तद्बाधकं। प्रत्यक्षं हि न प्रत्यभिज्ञानविषये पूर्वदृष्टदृश्यमानपर्यायव्यापिनि द्रव्ये प्रवर्तते तस्य दृश्यमानपर्यायविषयत्वात् इति नासिद्धं साधनं। एतेनानुमानं प्रत्यभिज्ञानस्य बाधकं प्रत्याख्यातं तस्यापि प्रत्यभिज्ञानविषये प्रवृत्त्ययोगात्, क्वचिदनुमेयमात्रे प्रवृत्तिसिद्धेः। तस्य तद्विषये प्रवृत्तौ वा सर्वथा बाधकत्वविरोधात्। ततः प्रत्यभिज्ञानं स्वविषये द्रव्ये प्रमाणं सकलबाधारहितत्वात् प्रत्यक्षवत् स्मृतिवद्वा एतेन सादृश्यनिबंधनं प्रत्यभिज्ञानं प्रमाणमावेदितं बोद्धव्यं तस्यापि स्वविषये बाधाकाररहितत्वसिद्धेः। यथैव हि प्रत्यक्षं स्वविषये साक्षात्क्रियमाणे स्मरणं च स्मर्यमाणेऽर्थे बाधाविधुरं तथा प्रत्यभिज्ञानमेकत्र द्रव्ये सादृश्ये च स्वविषये न संभवद्बाधकमिति कथमप्रमाणमनुमन्येमहि। यत्पुनः स्वविषये बाध्यमानं तत्प्रत्यभि-ज्ञानाभासं यथा प्रत्यक्षाभासं स्मरणाभासं वा न च तस्याप्रमाणत्वे सर्वथा प्रमाणत्वं युक्तं प्रत्यक्षस्याप्यप्रमा-णत्वप्रसंगात्। तस्माद्यथा शुक्ले शंखे पीताभासं प्रत्यक्षं तत्रैव शुक्लाभासेन प्रत्यक्षांतरेण बाध्यमानत्वात् अप्रमाणं न पुनः पीते कनकादौ पीताभासं प्रत्यक्षं। तथा तस्मिन्नेव स्वपुत्रादौ तादृशोयमिति प्रत्यभिज्ञानं सादृश्यनिबंधः स एवायमित्येकत्वनिबंधनेन प्रत्यभिज्ञानेन बाध्यमानमप्रमाणं सिद्धं न पुनः सादृश्य एव प्रव-र्तमानं स्वपुत्रादिना सादृश्येऽन्यपुत्रादौ तादृशोऽयमिति प्रत्यभिज्ञानं तस्याबाध्यत्वेन प्रमाणत्वात्। एवं लूनपु नर्जातनखकेशादिरिति सादृश्यप्रत्यवमर्शिप्रत्यभिज्ञानं तत्र तस्याबाध्यमानतया प्रमाणत्वसिद्धेः। तथैव पूर्वा-नुभूते हि हिरण्यादौ प्रदेशविशेषविशिष्टे स्मरणं विपरीतदेशतया तत्स्मरणस्य बाधकमिति न तत्तत्र प्रमाणं। यथानुभूतप्रदेशे तु तथैव स्मरणं प्रमाणमिति बोद्धव्यं। तत इदमभिधीयते यतो यतोर्थं परिच्छिद्य प्रवर्त-मानोऽर्थक्रियायां न विसंवाद्यते तत्तत्प्रमाणं यथा प्रत्यक्षमनुमानं वा। स्मरणात् प्रत्यभिज्ञानाच्च अर्थं परि-च्छिद्य प्रवर्तमानोऽर्थक्रियायां न विसंवाद्यते च तस्मात्प्रमाणं स्मरणं प्रत्यभिज्ञानं चेति। तथा परोक्षमेतदवि-संवादित्वात्। अनुमानवत्। साध्यसाधनसंबंधग्राहितर्कवद्वा विशदस्य भावनाज्ञानत्वात्। यावान् कश्चिद्धूमः स सर्वः पावकजन्मैव अपावकजन्मा वा न भवतीति सकलदेशकालव्याप्तसाध्यसाधनसंबंधोहापोहलक्षणो हि तर्कः प्रमाणयितव्यः तस्य कथंचिदपूर्वार्थत्वात्। प्रत्यक्षानुपलंभगृहीतप्रतिनियतदेशकालसाध्यसा-धनव्यक्तिमात्रग्राहित्वाभावात् गृहीतग्रहणसंभवात् बाधकवर्जितत्वाच्च। नहि तर्कस्य प्रत्यक्षं बाधकं तद्वि-षये तस्याप्रवृत्तेरनुमानवत् प्रवृत्तौ वा सर्वथा तद्बाधकत्वविरोधात् क्वचिदेव तद्बाधकोपपत्तेः। यस्य तु तद्बाधकं स तर्काभासो न प्रमाणमितीष्टं शिष्टैः स्मरणप्रत्यभिज्ञानाभासवत्। प्रत्यक्षानुमानाभासवद्वा तथा प्रमाणं तर्कस्ततोऽर्थं परिच्छिद्य प्रवर्तमानस्यार्थक्रियायां विसंवादाभावात् प्रत्यक्षानुमानवदिति प्रतिपत्तव्यं। परोक्षं चेदं तर्कज्ञानं अविसंवादकत्वात् अनुमानवत्। किं पुनरनुमानं नाम ?

## साधनात्साध्यविज्ञानमनुमानं।

तत्र साधनं साध्याविनाभाविनियमनिश्चयैकलक्षणं लक्षणांतरस्य साधनाभासेऽपि भावात्। स्वलक्ष णस्य साधनस्य साधर्म्यानुपपत्तेः पंचादिलक्षणवत्। नच सपक्षे सत्त्वं पक्षधर्मत्वं विपक्षे चासत्त्वमात्रं साधन-लक्षणं पश्यामस्तत्पुत्रत्वादितरतत्पुत्रवदित्यत्र साधनाभासे तत्सद्भावसिद्धेः। सपक्षे हीतरत्र तत्पुत्रे तत्पुत्रत्वस्य साधनस्य श्यामत्वव्याप्तस्य सत्त्वं प्रसिद्धं। विवादाध्यासिते च तत्पुत्रे पक्षीकृते तत्पुत्रत्वस्य सद्भावात् पक्षधर्म-। विपक्षे वा श्यामे क्वचिदन्यपुत्रे तत्पुत्रत्वस्याभावात् विपक्षेऽसत्त्वमात्रं च। नच तावता साध्यसाधं-

नत्वं साधनस्य । ननु साकल्येन साध्यनिवृत्तौ साधननिवृत्तेरसंभवात् परत्र गौरेऽपि तत्पुत्रे तत्पुत्रत्वस्य भावात्त न सम्यक् साधनमेतत् इति चेत तर्हि कार्त्स्न्येन साध्यनिवृत्तौ साधननिवृत्तेर्निश्चयएवैकं साधनलक्षणं सएवा न्यथानुपपत्तिनियमनिश्चयः स्याद्वादिभिः साधनलक्षणमभिधीयते तत्सद्भावे पक्षधर्मत्वाद्यभावेऽपि साधनस्य सम्यक्त्वप्रतीतेः उदेष्यति शकटं कृत्तिकोदयादित्यस्य पक्षधर्मत्वाभावेऽपि प्रयोजकत्वव्यवस्थितेः । न हि शकटे धर्मिण्युदेष्यत्तायां साध्यायां कृत्तिकाया उदयोऽस्ति तस्य कृत्तिकाधर्मत्वात्त ततो न पक्ष धर्मत्वं । यदि पुनराकाशं कालो वा धर्मी तस्योदेष्यच्छकटवत्त्वं साध्यं कृत्तिकोदयसाधनं पक्षधर्म एवेति मतं तदा धरित्रीधर्मिणि महोदध्याधाराग्निमत्त्वं साध्यं महानसधूमवत्त्वं साधनं पक्षधर्मोऽस्तु तथा च महानसधूमो महोदधावग्निं गमयेदिति न कश्चिदपक्षधर्मो हेतुः स्यात् । अथेत्थमेतस्य साधनस्य पक्षधर्मत्वसिद्धावपि न साध्यसाधनसामर्थ्यमविनाभावनियमनिश्चयस्याभावादित्यभिधीयते तर्हि स एव साधनलक्षणमक्षूणं परीक्षादक्षैरुपलक्ष्यते ।

योप्याह शकटोदयो भाविकारणं कृत्तिकोदयस्य तदन्वयव्यतिरेकानुविधानात् सति हि स्वकाले भविष्यति शकटोदये कृत्तिकोदय उपलभ्यते नासतीत्यन्वयव्यतिरेकानुविधानं सिद्धं भविष्यच्छकटकृत्तिकोदययोः कार्यकारणभावं साधयति विनष्टवर्तमानवदेव । यथैवोदगाद्भरणिः कृत्तिकोदयादित्यत्रातीतो भरण्युदयः कारणं, कृत्तिकोदयस्तत्कार्यं स्वकालेऽतीते सति भरण्युदये कृत्तिकोदयस्य भावादसत्यभावाच्च तदन्वयव्यतिरेकानुविधानात्त कार्यकारणभावः । तथा भविष्यद्वर्तमानयोरपि प्रकृतसाध्यसाधनयोर्न्यायस्य समानत्वात् । नचैकस्य कृत्तिकोदयस्य भविष्यदतीतकारणद्वितयं विरुध्यते भिन्नदेशयोरिव भिन्नकालयोरपि सहकारित्वविरोधात् । संहकस्य कार्यस्य कारणं हि सहकारित्वनिबंधनं नाभिन्नकालत्वमभिन्नदेशवत् । नचातीतानागतौ भरण्युदयशकटोदयौ कृत्तिकोदयस्योपादानकारणं पूर्वकृत्तिकालक्षणस्यानुदयमापन्नस्य तदुपादानकारणत्वसंप्रतिपत्तेः ? इति सोऽपि न प्रातीतिकवचनः तथा प्रतीत्यभावात् । कार्यकालमप्राप्नुवतोर्विनष्टानागतयोः कारणत्वे हि विनष्टतमानागततमयोरपि कारणत्वं कथं विनिवार्यं ? प्रत्यासत्तिविशेषाभावादिति चेत् तर्हि स एव प्रत्यासत्तिविशेषः कारणत्वाभिमतयोरतीतानागतयोः कारणत्वे हेतुर्वक्तव्यः । स चातीतस्य कार्ये व्यापारस्तावन्न भवति सर्वथापि कार्यकाले तदसत्त्वादनागतवत्त । तद्भावे भावप्रत्यासत्तिविशेष इत्यप्यसारं अतीतस्यानागतस्य चाभाव एव कार्यस्य भावात् भावे चाभावात् अन्यथा कार्यकारणयोरेककालतापत्तेः सकलसंतानानामेकक्षणवर्तित्वप्रसंगः । नैकक्षणसंतानो नाम तस्यापरामृष्टभेदनानाकार्यकारणलक्षणत्वात् ।

यदप्यभ्यधायि कारणस्यातीतस्यानागतस्य च स्वकाले भावे कार्यस्य भावात् अभावे चाभावात् तद भावाभावोऽन्वयव्यतिरेकानुविधानलक्षणः प्रत्यासत्तिविशेषोऽस्त्येव इति तदप्यसंगतं कारणत्वानभिमतातीतानागततमयोरपि तथा तद्भावप्रसंगात् । कार्यस्य भिन्नदेशस्य तु कारणत्वे युक्तस्तद्भावभावः कलशकुंभकारादिवत् । कुंभकारादिषु हि भिन्नस्वदेशेषु सत्सु कलशस्य भावोऽसत्सु चाभावस्तेषां तत्र व्यापारात् । कारणत्वानभिमतस्य तु भिन्नदेशस्य न कार्ये तद्भावभावो तत्र तस्याव्यापारात् अतीतानागतवत् । सतो हि कस्य चित्कचिद्व्यापारः श्रेयान् न पुनरसतः खरविषाणादेरिवेति युक्तं ततो भिन्नदेशस्यापि कस्यचिदेकस्य कार्ये व्याप्रियमाणस्य सहकारिकारणत्वं प्रतीतिमनुसरति न पुनर्भिन्नकालस्य प्रतीत्यतिलंघनात् ततो न कृत्तिकोदयशकटोदययोः कार्यकारणभावः समवतिष्टते व्याप्यव्यापकभाववत् । सत्यपि तयोः कार्यकारणभावे न हेतोः पक्षधर्मत्वं युज्यते इति पक्षधर्ममंतरेणापि हेतोर्गमकत्वसिद्धेर्न तल्लक्षणमुत्प्रेक्ष्यते । तथा न सपक्ष एव सत्त्वं निश्चितं तदभावेऽपि सर्वभावानामनित्यत्वे साध्ये सत्त्वादेः साधनस्य स्वयं साधुत्वसमर्थनात् । विपक्षे पुनरसत्त्वमेव निश्चितं साध्याविनाभावनियमनिश्चयरूपमेवेति तदेव हेतोः प्रधानलक्षणमस्तु किमत्र लक्षणांतरेण ?

अथ मतमेतत्पक्षधर्मत्वमसिद्धत्वमसिद्धत्वव्यवच्छेदार्थं साधनस्य लक्षणं निश्चीयते । सपक्ष एव सत्त्वं विरुद्धत्वव्यवच्छेदाय । विपक्षे चासत्त्वं—अनेकांतिकत्वव्यवच्छित्तये । तदनिश्चये हेतोरसिद्धत्वादिदोषत्रयपरिहारा-

संभवात् त्रैरूप्यं तल्लक्षणं सफलमेव । तदुक्तं—

हेतोस्त्रिष्वपि रूपेषु निर्णयस्तेन वर्णितः ।
असिद्धविपरीतार्थव्यभिचारिविपक्षतः इति ॥ १ ॥

तदप्यपरीक्षिताभिधानं सौगतस्य हेतोरन्यथानुपपत्तिनियमनिश्चयादेव दोषत्रयपरिहारसिद्धेः स्वयमसिद्धस्यान्यथानुपपत्तिनियमनिश्चयासंभवात् । अनैकांतिकविपरीतार्थवत् तस्य तथोपपत्तिनियमनिश्चयरूपत्वात् । तस्य चासिद्धव्यभिचारिणि विरुद्धे च हेतावसंभावनीयत्वात् । रूपत्रयस्याविनाभावनियमप्रपंचत्वात् साधनलक्षणत्वे तत एव रूपप्रपंचकस्य साधनलक्षणत्वमस्तु । पक्षव्यापकत्वान्वयव्यतिरेकाबाधितविषयत्वासत्प्रतिपक्षरूपाणि हि पंचाप्यविनाभावनियमप्रपंच एव बाधितविषयस्य सत्प्रतिपक्षितस्य चाविनाभावनियमानिश्चयात् पक्षाव्यापकानन्वयाव्यतिरेकवत् । न पक्षधर्मत्वे सत्येव साधनस्य सिद्धत्वं येनासिद्धविवेकतस्तत्तस्य लक्षणं, अपक्षधर्मस्यापि सिद्धत्वसमर्थनात् । नापि सपक्षे सत्त्वे एव विपरीतार्थविवेकः सर्वानेकांतात्मकत्वसाधने सत्त्वादेः सपक्षे सत्त्वाभावेऽपि विरुद्धत्वाभावात् परस्य सर्वानित्यत्वसाधनवत् । नच व्यतिरेकमात्रे सत्यपि व्यभिचारिविवेके श्यामत्वे साध्ये तत्पुत्रत्वादेर्व्यभिचारसाधनात् व्यतिरेकविशेषस्तु तदेवान्यथानुपपन्नत्वमिति न त्रीणि रूपाण्यविनाभावनियमप्रपंचः तेषु सत्सु हेतोरन्यथानुपपत्तिदर्शनात् । तेषां तत्प्रपंचत्वे कालाकाशादीनामपि तत्प्रपंचत्वप्रसक्तिस्तेष्वपि सत्सु तद्दर्शनात् । तेषां सर्वसाधरणत्वान्न हेतुरूपत्वमित्यपि पक्षधर्मत्वादिषु समानं तेषामपि साधारणत्वाद्धेत्वाभासेष्वपि भावात् । ततोऽसाधारणं लक्षणमाचक्षाणैरन्यथानुपपन्नत्वमेव नियतं हेतुलक्षणं पक्षीकर्तव्यं । तथोक्तं—

अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं
नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किं ॥ १ ॥ इति

एतेन पंचरूपाणि हेतोरविनाभावनियमप्रपंच एव इत्येतदपास्तं सत्यप्यबाधितविषयत्वे सत्प्रतिपक्षे चाविनाभावनियमानवलोकात् । पक्षव्यापकत्वान्वयव्यतिरेकवत् । स श्यामस्तत्पुत्रत्वादितरतत्पुत्रवत् इत्यत्र तत्पुत्रत्वस्य हेतोर्विषये श्यामत्वे बाधकस्य प्रत्यक्षादेरभावात् अबाधितविषयत्वसिद्धावपि अविनाभावनियमासत्त्वात् अश्यामेन तत्पुत्रेण व्यभिचारात् । तथा तस्य श्यामत्वसाधनानुमानस्य प्रतिपक्षस्यासत्त्वात् असत्प्रतिपक्षत्वे सत्यपि व्यभिचारात्साधनस्य तदभावः प्रतिपत्तव्यः । तदत्रैवं वक्तव्यं—

अन्यथानुपपन्नत्वं रूपैः किं पंचभिः कृतं
नान्यथानुपपन्नत्वं रूपैः किं पंचभिः कृतं ॥ १ ॥ इति

तदेवमन्यथानुपपत्तिनियमनिश्चय एवैकं साधनस्य लक्षणं प्रधानं तस्मिन्सति त्रिलक्षणस्य पंचलक्षणस्य प्रयोगो निवार्यते एवेति प्रयोगपरिपाट्याः प्रतिपाद्यानुरोधतः परानुग्रहप्रवृत्तैरभ्युपगमात् । तथा चाभ्यधायि **कुमारनंदि**भट्टारकैः—

अन्यथानुपपत्त्येकलक्षणं लिंगमंग्यते
प्रयोगपरिपाटी तु प्रतिपाद्यानुरोधतः ॥ १ ॥ इति

तच्च साधनं एकलक्षणं सामान्यादेकविधमपि विशेषतोऽतिसंक्षेपाद्द्विविधं विधिसाधनं संक्षेपात्त्रिविधंमभिधीयते कार्यं कारणस्य, कारणं कार्यस्य, अकार्यकारणमकार्यकारणस्येति प्रकारांतरस्यात्रैवांतर्भावात् । तत्र कार्यं हेतुः, अग्निरत्र धूमात् इति कार्यकार्यादेरत्रैवांतर्गतत्वात् । कारणं हेतुः—अस्त्यत्र छाया छत्रात् इति कारणकारणादेरत्रानुप्रवेशान्नार्थांतरत्वं । न चानुकूलत्वमात्रमन्त्यक्षणप्राप्तं वा कारणं लिंगमुच्यते येन प्रतिबंधवैकल्यसंभवाद्व्यभिचारि स्यात् । द्वितीयक्षणे कार्यस्य पक्षीकरणादनुमानानर्थकत्वं वा कार्याविनाभाविनियमतया निश्चितस्यानुमानकालप्राप्तस्य कारणस्य विशिष्टस्य लिंगत्वात् । अकार्यकारणं चतुर्विधं—व्याप्यं सहचरं पूर्वचरं, उत्तरचरं चेति । तत्र व्याप्यलिंगं व्यापकस्य यथा सर्वमनेकांतात्मकं सत्त्वादिति सत्त्वं हि वस्तुत्वं—

**उत्पादव्ययध्रौव्ययुक्तं सत्**

इति वचनात् । नच तदेकांतेन सुनयविषयेण व्यभिचारि तस्य वस्त्वंशत्वात् । सहचरं लिंगं यथा–अस्ति तेजसि स्पर्शसामान्यं (१) न रूपसामान्यस्य कार्यं कारणं वा नापि रूपसामान्यं स्पर्शसामान्यस्य तयोः सर्वत्र सर्वदा समकालत्वात् सहचरत्वप्रसिद्धेः । एतेन संयोगिन एकार्थसमवायिनश्च साध्यसमकालस्य सहचरत्वं निवेदितमेकसामग्र्यधीनस्यैव प्रतिपत्तव्यं समवायिनः कारणत्ववत् । पूर्वचरं लिंगं यथोदेष्यति शकटं कृत्तिकोदयात् इति पूर्वपूर्वचरायनेनैव संगृहीतं । उत्तरचरलिंगं यथा–उदगाद्भरणिः कृतिकोदयात् इति, उत्तरोत्तरचरमेतेनैव संगृह्यते तदेतत्साध्यस्य विधौ साधनं षड्विधमुक्तं। प्रतिषेधे तु प्रतिषेध्यस्य विरुद्धं कार्यं विरुद्धं कारणं विरुद्धाकार्यकारणं चेति । तत्र विरुद्धकार्यलिंगं-नास्त्यत्र शीतस्पर्शो धूमात् इति शीत स्पर्शेन हि विरुद्धो वन्हिः तस्य कार्यं धूम इति विरुद्धकारणं । नास्य पुंसोऽसत्यमस्ति सम्यग्ज्ञानात् इति विरुद्धं ह्यसत्येन सत्यं तस्य कारणं सम्यग्ज्ञानं यथार्थज्ञानं रागद्वेषरहितं तत्कृतश्चित्सुक्ताभिधानादेः प्रसिद्ध्यत् सत्यं साधयति । तच्च सिद्ध्यदसत्यं प्रतिषेधयति इति । विरुद्धाकार्यकारणं चतुर्विधं–विरुद्धव्याप्यं विरुद्धसहचरं विरुद्धपूर्वचरं विरुद्धोत्तरचरं चेति तत्र विरुद्धव्याप्यं नास्त्यत्र शीतस्पर्शः, औष्ण्यात् । औष्ण्यं हि व्याप्यमग्नेः स च विरुद्धः शीतस्पर्शेन प्रतिषेध्येनेति । विरुद्धसहचरं नास्त्यस्य मिथ्याज्ञानं सम्यग्दर्शनादिति मिथ्याज्ञानेन हि सम्यग्ज्ञानं विरुद्धं तत्सहचरं सम्यग्दर्शनमिति । विरुद्धपूर्वचरं नोदेष्यति मुहूर्तांते शकटं रेवत्युदयात् । शकटोदयविरुद्धो ह्यश्वन्युदयः तत्पूर्वचरो रेवत्युदयः। विरुद्धोत्तरचरं–मुहूर्तात् प्राङ्नोदगाद्भरणिः पुष्पोदयादिति । भरण्युदयविरुद्धो हि पुनर्वसूदयः तदुत्तरचरः पुष्पोदय इति । तान्येतानि साक्षात्प्रतिषेध्यविरुद्धकार्यादीनि लिंगानि विधिद्वारेण प्रतिषेधसाधनानि षडभिहितानि । परंपरया तु कारणविरुद्धकार्यं व्यापकविरुद्धकार्यं कारणव्यापकविरुद्धकार्यं व्यापककारणविरुद्धकार्यं कारणविरुद्धकारणं व्यापकविरुद्धकारणं कारणव्यापकविरुद्धकारणं व्यापककारणविरुद्धकारणं चेति तथा कारणविरुद्धव्याप्यादीनि कारणविरुद्धसहचरादीनि च यथाप्रतीति वक्तव्यानि । तत्र कारणविरुद्धकार्यं–नास्त्यस्य हिमजनितरोमहर्षादिविशेषो धूमात् इति प्रतिषेध्यस्य हि रोमहर्षादिविशेषस्य कारणं हिमं तद्विरुद्धोऽग्निः तत्कार्यं धूम इति । व्यापकविरुद्धकार्यं नास्त्यत्र शीतसामान्यव्याप्तः शीतस्पर्शविशेषो धूमात् इति शीतस्पर्शविशेषस्य हि निषेध्यस्य व्यापकं शीतसामान्यं तद्विरुद्धोऽग्निः तस्य कार्यं धूम इति । कारणव्यापकविरुद्धकार्यं नास्त्यत्र हिमत्वव्याप्तहिमविशेषजनितरोमहर्षादिविशेषो धूमात् इति रोमहर्षादिविशेषस्य हि कारणं हिमविशेषस्तस्य व्यापकं हिमत्वं तद्विरुद्धोग्निः तत्कार्यं धूम इति । व्यापककारणविरुद्धकार्यं—नास्त्यत्र शीतस्पर्शविशेषस्तद्व्यापकशीतस्पर्शमात्रकारणहिमविरुद्धाग्निकार्यधूमादिति शीतस्पर्शविशेषस्य हि व्यापकं शीतस्पर्शमात्रं तस्य कारणं हिमं तद्विरुद्धोग्निस्तत्कार्यं धूम इति । कारणविरुद्धकारणं–नास्त्यस्य मिथ्याचरणं तत्त्वार्थोपदेशग्रहणात् मिथ्याचरणस्य हि कारणं मिथ्याज्ञानं तद्विरुद्धं तत्त्वज्ञानं तस्य कारणं तत्त्वार्थोपदेशग्रहणं । तत्त्वार्थोपदेशश्रवणे सत्यपि कस्य चित्तत्त्वज्ञानासंभवाद् ग्रहणवचनं । तत्त्वार्थानां श्रद्धानपूर्वकं–अवधारणं हि ग्रहणमिष्टं, अन्यथास्य ग्रहणाभासत्वात् । मिथ्याचरणस्य चात्र नास्तिता साध्यते न पुनरनाचरणस्य तत्त्वार्थोपदेशग्रहणादुत्पन्नतत्त्वज्ञानस्याप्यसंयतसम्यग्दृष्टेश्चारित्रासंभवात्—अनाचारस्य प्रसिद्धेः । न तु मिथ्याचरणमप्यस्य संभवति तत्त्वज्ञानविरोधात् तेन सह तस्यानवस्थानात् इति । तथा व्यापकविरुद्धकारणं लिंगं–नास्त्यस्यात्मनि मिथ्याज्ञानं तत्त्वार्थोपदेशग्रहणात् इति आत्मनि मिथ्याज्ञानविशेषस्य व्यापकं मिथ्याज्ञानमात्रं तद्विरुद्धं सत्यज्ञानं तस्य कारणं तत्त्वार्थोपदेशग्रहणं यथार्थोपवर्णितमिति । कारणव्यापकविरुद्धकारणं–नास्त्यस्य मिथ्याचरणं तत्त्वार्थोपदेशग्रहणादिति अत्र मिथ्याचरणस्य कारणं मिथ्याज्ञानविशेषः तस्य व्यापकं मिथ्याज्ञानमात्रं तद्विरुद्धं तत्त्वज्ञानं, तस्य कारणं तत्त्वार्थोपदेशग्रहणमिति प्रत्येयं । व्यापककारणविरुद्धकारणं लिंगं नास्त्यस्य मिथ्याचरणविशेषस्तत्त्वार्थोपदेशग्रहणादिति मिथ्याचरण विशेषस्य हि व्यापकं मिथ्याचरणसामान्यं तस्य कारणं मिथ्याज्ञानं तद्विरुद्धं तत्त्वज्ञानं तस्य कारणं तत्त्वार्थोपदे-

---

(१) रूपसामान्यात् । स्पर्शसामान्यं हि- इति शोधितं ।

शग्रहणमिति तथा कारणविरुद्धव्याप्यं लिंगं न संति सर्वथैकांतवादिनः प्रशमसंवेगानुकंपास्तिक्यानि वैपर्यासिकमिथ्यादर्शनविशेषात् । प्रशमादीनां हि कारणं सम्यग्दर्शनं तद्विरुद्धं मिथ्यादर्शनसामान्यं तेन व्याप्यं मिथ्यादर्शनं वैपर्यासिकविशिष्टमिति । व्यापकविरुद्धव्याप्यं—न संति स्याद्वादिनो वैपर्यासिकादिमिथ्यादर्शनविशेषाः सत्यज्ञानविशेषात् इति वैपर्यासिकादिमिथ्यादर्शनविशेषाणां हि व्यापकं मिथ्यादर्शनसामान्यं तद्विरुद्धं तत्त्वज्ञानसामान्यं तस्य व्याप्यस्तत्त्वज्ञानविशेष इति । कारणव्यापकविरुद्धव्याप्यं—न संत्यस्य प्रशमादीनि मिथ्याज्ञानविशेषादिति, प्रशमादीनां हि कारणं सम्यग्दर्शनविशेषः तस्य व्यापकं सम्यग्दर्शनसामान्यं तद्विरुद्धं मिथ्याज्ञानसामान्यं तेन व्याप्तो मिथ्याज्ञानविशेष इति । व्यापककारणविरुद्ध व्याप्यं लिंगं न संत्यस्य तत्त्वज्ञानविशेषाः मिथ्यार्थोपदेशग्रहणविशेषात् । तत्त्वज्ञानविशेषाणां व्यापकं तत्त्वज्ञानसामान्यं तस्य कारणं तत्त्वार्थोपदेशग्रहणं तद्विरुद्धं मिथ्यार्थोपदेशग्रहणसामान्यं तेन व्याप्तो मिथ्यार्थोपदेशग्रहणविशेष इति । एवं कारणविरुद्धसहचरं लिंगं—न संत्यस्य प्रशमादीनि मिथ्याज्ञानादिति प्रशमादीनां हि कारणं सम्यग्दर्शनं तद्विरुद्धं मिथ्यादर्शनं तत्सहचरं मिथ्याज्ञानमिति । व्यापकविरुद्धसहचरं—न संत्यस्य मिथ्यादर्शनविशेषाः सम्यग्ज्ञानादिति मिथ्यादर्शनविशेषाणां हि व्यापकं मिथ्यादर्शनसामान्यं तद्विरुद्धं तत्त्वार्थश्रद्धानं सम्यग्दर्शनं तत्सहचरं सम्यग्ज्ञानमिति । कारणव्यापकविरुद्धसहचरं—न संत्यस्य प्रशमादीनि मिथ्याज्ञानादिति प्रशमादीनां हि कारणं सम्यग्दर्शनविशेषास्तेषां व्यापकं सम्यग्दर्शनसामान्यं तद्विरुद्धं मिथ्यादर्शनं तत्सहचरं मिथ्याज्ञानमिति । व्यापककारणविरुद्धसहचरं न संत्यस्य मिथ्यादर्शनविशेषाः सत्यज्ञानादिति मिथ्यादर्शनविशेषाणां हि व्यापकं मिथ्यादर्शनसामान्यं तस्य कारणं दर्शनमोहोदयस्तद्विरुद्धं सम्यग्दर्शनं तत्सहचरं सम्यग्ज्ञानमिति । तदेतत्सामान्यतो विरोधिलिंगं, प्रपंचतो द्वाविंशतिप्रकारमपि भूतमभूतस्य गमकमन्यथानुपपन्नत्वनियमनिश्चयलक्षणत्वात् प्रतिपत्तव्यं । भूतं भूतस्य प्रयोजकं कार्यादि षट्प्रकारं पूर्वमुक्तं । तदित्थं विधिमुखेन विधायकं-प्रतिषेधमुखेन प्रतिषेधकं च लिंगमभिधाय सांप्रतं प्रतिषेधमुखेन विधायकं प्रतिषेधकं च साधनमभिधीयते तत्राभूतं भूतस्य विधायकं-यथा—अस्त्यस्य प्राणिनो व्याधिविशेषो निरामयचेष्टानुपलब्धेरिति । तथा—अस्ति सर्वथैकांतवादिनामज्ञानादिदोषः युक्तिशास्त्राविरुद्धवचनाभावात् इति अस्त्यस्य मुनेराप्तत्वं विसंवादकत्वाभावात् । अभूदेतस्य तालफलस्य पतनकर्म वृंतसंयोगाभावात् इति बहुधा द्रष्टव्यं । तथैवाभूतमभूतस्य प्रतिषेधस्य प्रतिषेधकं यथा—नास्त्यत्र शवशरीरे बुद्धिर्व्यापारव्याहाराकारविशेषानुपलब्धेरिति कार्यानुपलब्धिः । न संत्यस्य प्रशमादीनि तत्त्वार्थश्रद्धानानुपलब्धेरिति कारणानुपलब्धिः । नास्त्यत्र शिंशपा वृक्षानुपलब्धेरिति व्यापकानुपलब्धिः । नास्त्यस्य तत्त्वज्ञानं सम्यग्दर्शनाभावात् इति सहचरानुपलब्धिः । न भविष्यति मुहूर्तांते शकटोदयः कृत्तिकोदयानुपलब्धेरिति पूर्वचरानुपलब्धिः । नोदगाद्भरणिर्मुहूर्तात्प्राक्कृत्तिकोदयानुपलब्धेरिति उत्तरचरानुपलब्धिः । एवं परंपरया कारणाद्यनुपलब्धिः व्यापकव्यापकानुपलब्ध्यादिकमपि बहुधा प्रतिषेधद्वारेण प्रतिषेधसाधनमवधारणीयं ।

अत्र संग्रहश्लोकाः—

स्यात्कार्यं कारणव्याप्यं प्राक् सहोत्तरचारि च
लिंगं तल्लक्षणव्याप्तेर्भूतं भूतस्य साधकं ॥ १ ॥
षोढा विरुद्धकार्यादि साक्षादेवोपवर्णितं
लिंगं भूतमभूतस्य लिंगलक्षणयोगतः ॥ २ ॥
पारंपर्यात्तु कार्यं स्यात् कारणं व्याप्यमेव च
सहचारि च निर्दिष्टं प्रत्येकं तच्चतुर्विधं ॥ ३ ॥
कारणाद्विष्टकार्यादिभेदेनोदाहृतं पुरा
यथा षोडशभेदं स्यात् द्वाविंशतिविधं ततः ॥४॥
लिंगं समुदितं ज्ञेयमन्यथानुपपत्तिमत्

तथा भूतमभूतस्याप्यूह्यमन्यदपीदृशं ॥ ५ ॥
अभूतं भूतमुन्नीतं भूतस्यानेकधा बुधैः
तथा ऽभूतमभूतस्य यथायोग्यमुदाहरेत् ॥ ६ ॥
बहुधाप्येवमाख्यातं संक्षेपेण चतुर्विधं
अतिसंक्षेपतो द्वेधोपलंभानुपलंभभृत् ॥ ७ ॥

एतेन कार्यस्वभावानुपलंभविकल्पात् त्रिविधमेव लिंगमिति नियमः प्रत्याख्यातः सहचरादेर्लिंगांतरत्वात् प्रत्यक्षपूर्वकं त्रिविधमनुमानं-पूर्ववच्छेषवत्सामान्यतोदृष्टमित्यपि। यदि पूर्ववच्छेषवत् केवलान्वयि, पूर्ववत्सामान्यतोदृष्टं केवलव्यतिरेकि पूर्ववच्छेषवत्सामान्यतोदृष्टमन्वयव्यतिरेकि व्याख्यायते त्रिसूत्रीकरणादस्य सूत्रस्य तदा न किंचिद्विरुद्धं निगादितालिंगप्रकारेषु त्रिविधस्यापि संभवात्। यथोपपत्तिनियमात्केवलान्वयिनो गमकत्वाविरोधात्। तत्र वैधर्म्यदृष्टांताभावेऽपि साध्याविनाभावनियमनिश्चयात्। अथ पूर्ववत्कारणात्कार्यानुमानं शेषवत् कार्यात्कारणानुमानं सामान्यतो दृष्टं। अकार्यकारणादकार्यकारणानुमानं सामान्यतोऽविनाभावमात्रादिति व्याख्यायते तदापि स्याद्वादिनामभिमतमेव तथा सर्वहेतुप्रकारसंग्रहस्य संक्षेपतः प्रतिपादनात्। यदापि पूर्ववत्पूर्वलिंगलिंगिसंबंधस्य क्वचिन्निश्चयादन्यत्र पूर्ववद्वर्तमानं शेषवत्परिशेषानुमानं प्रसक्तप्रतिषेधे परिशिष्टस्य प्रतिपत्तेः। सामान्यतो दृष्टं विशिष्टव्यक्तौ संबंधाग्रहणात्सामान्येन दृष्टं यथा—गतिमानादित्यः देशाद्देशांतरप्राप्तेः देवदत्तवदिति व्याख्या विधीयते तदापि स्याद्वादिनां नानवधेयं प्रतिपादितहेतुप्रपंचस्यैव विशेषप्रकाशनात्। सर्वं हि लिंगं पूर्ववदेव परिशेषानुमानस्यापि पूर्ववत्त्वासिद्धेः, प्रसक्तप्रतिषेधस्य परिशिष्टप्रतिपत्त्यविनाभूतस्य पूर्वं क्वचिन्निश्चितस्य विवादाध्यासितपरिशिष्टप्रतिपत्तौ साधनस्य प्रयोगात्। सामान्यतोदृष्टस्य च पूर्ववत्त्वप्रतीतेः क्वचिद्देशांतरप्राप्तेः। गतिमत्त्वाविनाभाविन्या एव देवदत्तादौ प्रतिपत्तेरन्यथा तदनुमानाप्रवृत्तेः। परिशेषानुमानमेव वा सर्वं संप्रतीयते पूर्ववतोऽपि धूमात्पावकानुमानस्य प्रसक्तौ पावकप्रतिषेधात् प्रवृत्तिघटनात्। तदप्रतिपत्तौ विवादानुपपत्तेरनुमानवैयर्थ्यात् तथा सामान्यतोदृष्टस्यापि देशांतरप्राप्तेरादित्यगत्यनुमानस्य तदगतिमत्त्वस्य प्रसक्तस्य प्रतिषेधादुपपत्तेरिति। सकलं सामान्यतोदृष्टमेव वा सर्वत्र सामान्येनैव लिंगालिंगिसंबंधप्रतिपत्तेर्विशेषतस्तत्संबंधस्य प्रतिपत्तुमशक्तेः। केन चिद्विशेषेण लिंगभेदकल्पना न निवार्यते एव प्रकारांतरतस्तद्भेदकल्पनावत्। केवलमन्यथानुपपन्नत्वनियमनिश्चय एव हेतोः प्रयोजकत्वनिमित्तं तस्मिन् सति हेतुप्रकारभेदपरिकल्पनायाः प्रतिपत्तुरभिप्रायवैचित्र्यात्। वैचित्र्यं नान्यथेति सुनिश्चितं नश्चेतसि तथा प्रतीतेरबाध्यमानत्वात्। यदापि—अवीतंवीतं वीतावीतमिति लिंगं त्रिविधमनुमन्यते तदापि नान्यथानुपपन्नत्वं नियमनिश्चयलक्षणमतिक्रम्य व्यवतिष्ठते। नापि प्रतिपादितहेतुप्रपंचबहिर्भूतं समयांतरभाषया केवलान्वय्यादित्रयस्यैव तथाविधानात्। क्वचित्साध्यसाधनधर्मयोः साहचर्यमविनाभावनियमलक्षणमुपलभ्यान्यत्र साधनधर्मदर्शनात्। साध्यधर्मप्रतिपत्तिरावीतमुच्यते यथा गुणागुणिनौ परस्परं भिन्नौ भिन्नप्रत्ययविषयत्वात् घटपटवदीति तच्च केवलान्वयीष्यते कथंचिद्भेदएव साध्ये ऽन्यथानुपपन्नत्वसिद्धेः सर्वथा भेदे गुणगुणिभावविरोधात्त गमकत्वासिद्धेः। तथा क्वचिदेकस्य धर्मस्य व्यावृत्तौ परस्य धर्मस्य व्यावृत्तिं नियमवतीमुपलभ्यान्यत्र तद्धर्मस्य निश्चयात् साध्यसिद्धिर्वीतं कथ्यते यथा सात्मकं जीवच्छरीरं प्राणादिमत्त्वात् इति तदिदं केवलव्यतिरेकीष्टं परिणामिनात्मना सात्मकत्वव्यावृत्तौ भस्मनि प्राणादिमत्त्वव्यावृत्तिनियमनिश्चयात् निरन्वयक्षणिकचित्तवत् कूटस्थेनात्मना प्राणाद्यर्थक्रियानिष्पादनविरोधात्। वीतावीतं तु तदुभयलक्षणयोगादन्वयव्यतिरेकि धूमादेः पावकाद्यनुमानं प्रसिद्धमेवेति न हेत्वंतरमस्ति ततः सूक्तं—अन्यथानुपपत्तिनियमनिश्चयलक्षणं साधनं अतिसंक्षेपविस्तरतोऽभिहितस्य सकलसाधनविशेषस्य तेन व्याप्तत्वात्। तथाविधलक्षणात्साधनात् साध्ये साधयितुं शक्ये, अभिप्रेते क्वचिदप्रसिद्धे च विज्ञानमनुमानमिति। साधयितुमशक्ये सर्वथैकांते साधनस्याप्रवृत्तेः तत्र तस्य विरुद्धत्वात् स्वयमनभिप्रेते चातिप्रसंगात् प्रसिद्धे च वैयर्थ्यात् तस्य साध्याभासत्त्वप्रसिद्धेः प्रत्यक्षादिविरुद्धस्यानिष्टस्य सुप्रसिद्धस्य च साधनाविषयत्वनिश्चयात्।

१ लिंगमिति पाठांतरं।

तदुक्तं—अकलंकदेवैः—

साध्यं शक्यमभिप्रेतमप्रसिद्धं ततोऽपरं
साध्याभासं विरुद्धादि साधनाविषयत्वतः ॥ १ ॥

तदेतत्साधनात् साध्यविज्ञानमनुमानं स्वार्थमभिनिबोधलक्षणं विशिष्टमतिज्ञानं साध्यं प्रत्यभिमुखान्नियमितात्साधनादुपजातबोधस्य तर्कफलस्याभिनिबोध इति संज्ञाप्रतिपादनात् । परार्थमनुमानमनक्षरश्रुतज्ञानं–अक्षरश्रुतज्ञानं च तस्य श्रोत्रमतिपूर्वकस्य च तथात्वोपपत्तेः ? । शब्दात्मकं तु परार्थानुमानमयुक्तं शब्दस्य प्रत्यवमर्शिनोऽपि सर्वस्य द्रव्यागमरूपत्वप्रतीतेः कथमन्यथा प्रत्यक्षमपि शब्दात्मकं परार्थं न भवेत् सर्वथा विशेषाभावात् प्रतिपादकप्रतिपाद्यजनयोः स्वपरार्थानुमानकार्यकारणत्वासिद्धेरुपचारादनुमानपरामर्शिनो वाक्यस्य परार्थानुमानत्वप्रतिपादनमविरुद्धं नान्यथातिप्रसंगादिति बोद्धव्यं । तदेतत्परोक्षं प्रमाणमविशदत्वात् श्रुतज्ञानवत् ।

किं पुनः श्रुतज्ञानमित्येतदभिधीयते—श्रुतज्ञानावरणवीर्यांतरायक्षयोपशमविशेषांतरंगे कारणे सति बहिरंगे मतिज्ञाने च, अनिंद्रियविषयालंबनं, अविशदं ज्ञानं श्रुतज्ञानं । केवलज्ञानं तीर्थकरत्वनामपुण्यातिशयोदयनिमित्तकभगवत्तीर्थकरध्वनिविशेषादुत्पन्नं गणधरदेवश्रुतज्ञानमेवमसंगृहीतं स्यादिति न शंकनीयं तस्यापि श्रोत्रमतिपूर्वकत्वात् । प्रसिद्धमतिश्रुतावधिमनःपर्ययज्ञानानि वचनजनितप्रतिपाद्यजनवचनश्रुतज्ञानवत् । समुद्रघोषजलधरस्वनश्रुतिजनिततदविनाभाविपदार्थविषयश्रुतज्ञानवद्वा ततो निरवद्यं श्रुतज्ञानलक्षणं-अव्याप्त्यतिव्याप्त्यसंभवदोषरहितत्वात् । अनुमानलक्षणवत् । तदेवंविधं श्रुतज्ञानं प्रमाणमविसंवादकत्वात् प्रत्यक्षानुमानवत् । नचासिद्धमविसंवादकत्वमस्येति शंकितव्यं ततोऽर्थं परिच्छिद्य प्रवर्तमानस्य विसंवादाभावात् सर्वदाऽर्थक्रियायां संवादप्रसिद्धेः प्रत्यक्षादिवत् ।

ननु च श्रोत्रमतिपूर्वकश्रुतज्ञानादर्थं प्रतिपद्य वर्तमानस्यार्थक्रियायामविसंवादकस्य क्वचिदभावात् न प्रामाण्यं सर्वत्रानाश्वासादिति चेत् ? न प्रत्यक्षादेरपि शुक्तिकाशकलं रजताकारतया परिच्छिद्य तत्र प्रवर्तमानस्यार्थक्रियायां रजतसाध्यायामविसंवादविरहात् । सर्वत्र प्रत्यक्षेऽनाश्वासादप्रामाण्यप्रसंगात् । प्रत्यक्षाभासे विसंवाददर्शनान्न प्रत्यक्षेऽनाश्वासोऽनुमानवदिति चेत् तर्हि श्रुतज्ञानाभासाद्विसंवादप्रसिद्धेः सत्यश्रुतज्ञाने कथमनाश्वासः ? नच सत्यं श्रुतज्ञानमसिद्धं तस्य लोके प्रसिद्धत्वात् सुयुक्तिकसद्भावाच्च तथाहि श्रोत्रमतिपूर्वकं श्रुतज्ञानं प्रकृतं सत्यमेव अदुष्टकारणजन्यत्वात् प्रत्यक्षादिवत् । तद्द्विविधं सर्वज्ञासर्वज्ञवचनश्रवणनिमित्तत्वात् । तच्चोभयमदुष्टकारणजन्यं गुणवद्वक्तृकशब्दजनितत्वात् ।

ननु च नद्यास्तीरे मोदकराशयः संतीति प्रहसनेन गुणवद्वक्तृकशब्दादुपजनितस्यापि श्रुतज्ञानस्यासत्यत्वसिद्धेर्व्यभिचारिगुणवद्वक्तृकशब्दजनितत्वमदुष्टकारणजन्यत्वे साध्ये ततो न तत्तद्गमकमिति न मंतव्यं प्रहसनपरस्य वक्तुर्गुणवत्त्वासिद्धेः प्रहसनस्यैव दोषत्वादज्ञानादिवत् । कथं पुनर्विवादापन्नस्य श्रोत्रमतिपूर्वक श्रुतज्ञानस्य गुणवद्वक्तृकशब्दजनितत्वं सिद्धं ? इति चेत् सुनिश्चितासंभवद्बाधकत्वादिति भाषामहे । प्रत्यक्षे ह्यर्थे प्रत्यक्षस्यानुमेयेऽनुमानस्यात्यंतपरोक्षे चागमस्य बाधकस्यासंभवात् असंभवद्बाधकत्वं तस्य सिद्धं । देशकालपुरुषांतरापेक्षयापि संशयानुत्पत्तेः सुनिश्चितत्वविशेषणमपि साधनस्येति नासिद्धताशंकावतरति । नाप्यनैकांतिकता विपक्षे क्वचिदसंभवात् । न विरुद्धता सुनिश्चितासंभवद्बाधकस्य श्रुतज्ञानस्य अगुणवद्वक्तृक शब्दजनितस्य वादिप्रतिवादिप्रसिद्धस्यासंभाव्यमानत्वात् । तथा व्याहतत्वाच्च । कथंचिदपौरुषेयशब्दजनित श्रुतज्ञानस्य तु गुणवद्वक्तृकशब्दजनितत्वेनादुष्टकारणजन्यत्वं सिद्ध्येत् । ततश्च सत्यत्वमिति स्याद्वादिनां सर्वमनवद्यं पर्यायार्थिकनयप्राधान्यात् द्रव्यार्थिकनयगुणभावाच्च श्रुतज्ञानस्य गुणवद्वक्तृकशब्दजनितत्वसिद्धेः द्रव्यार्थिकप्राधान्यात्पर्यायार्थिकगुणभावाच्च गुणवद्व्याख्यातृकशब्दजनितत्वोपपत्तेश्च । नच सर्वथा पौरुषेयःशब्दोऽपौरुषेयो वा प्रमाणतः सिद्ध्यते ।

ननु च विवादापन्नः शब्दः पौरुषेय एव प्रयत्नानंतरीयकत्वात् घटादिवदित्यनुमानात् आगमस्य द्वादशांगस्यांगबाह्यस्य चानेकभेदस्य पौरुषेयत्वमेव युक्तं भारतादिवदिति कश्चित् सोऽप्येवं पृष्टः सन्नाचष्टां–किं

सर्वथा प्रयत्नानंतरीयत्वहेतुः कथंचिद्वा? सर्वथा चेत् ? अप्रसिद्धः स्याद्वादिनो द्रव्यार्थादिप्रयत्नानंतरीयकत्वादागमस्य । कथंचिच्चेद्विरुद्धः कथंचिदपौरुषयत्वसाधनात् । प्रयत्नानंतरीयकत्वं हि प्रवचनस्योच्चारकपुरुषप्रयत्नानंतरोपलंभात् स्यात् उत्पादकपुरुषप्रयत्नानंतरोपलंभाद्वा ? प्रथमकल्पनायामुच्चारकपुरुषापेक्षया पौरुषेयत्वमेव तस्य संप्रति पुराणपुरुषोत्पादितकाव्यप्रबंधस्येव प्रसक्तं। न पुनरुत्पादकपुरुषापेक्षया प्रवचनस्यानादिनिधनस्योत्पादकपुरुषाभावात् । सर्वज्ञ उत्पादक इति चेत् ? वर्णात्मनः पदवाक्यात्मनो वा प्रवचनस्योत्पादकः स स्यात् ? न तावद्वर्णात्मनस्तद्वर्णानां प्रागपि भावात् तत्सदृशानां पूर्वं भावो न पुनस्तेषां घटादीनामिवेति चेत् कथमिदानीमनुवादकस्तेषामुत्पादको न स्यात् ? तदनुवादात् प्रागपि तत्सदृशानामेव सद्भावात् तेषामनूद्यमानानां तदैव सद्भावात् । तथाच न कश्चिदुत्पादको वर्णानां सर्वस्योत्पादकत्वासिद्धेः । यथैव हि कुंभादीनां कुंभकारादिरुत्पादक एव न पुनरनुकारकस्तथा वर्णानामपीति तदनुवादकव्यवहारविरोधः पूर्वोपलब्धवर्णानां सांप्रतिकवर्णानां च सादृश्यादेकत्वोपचारात्पश्चाद्वादकोऽनुवादक एव । असावाह वर्णान्नाहमिति स्वातंत्र्यपरिहरणात्पारतंत्र्यानुसरणादिति चेत् तर्हि यथा वर्णानां पठितानुवादकः तथा पाठयितापि तस्यापि स्वातंत्र्याभावात् सर्वस्य स्वोपाध्यायपरतंत्रत्वात् तत एवं वक्तव्यं—

> नेह वर्णान्नरः कश्चित् स्वातंत्र्येण प्रपद्यते
> यथैवास्मै परैरुक्तास्तथैवैतान्विवक्ष्यते ॥ १ ॥
> परेप्येवं विवक्ष्यंति तस्मादेषामनादिता
> प्रसिद्धा व्यवहारेण संप्रदायाव्यवच्छिदा ॥ २ ॥

तथा च सर्वज्ञोप्यनुवादक एव पूर्वपूर्वसर्वज्ञोदितानामेव चतुःषष्ठिवर्णानामुत्तरोत्तरसर्वज्ञेनानुवादात् । तस्य पूर्वसर्वज्ञोदितवर्णानुपलंभे पुनरसर्वज्ञत्वप्रसक्तिः । तदेवमनादिसर्वज्ञसंततिमिच्छतां न कश्चित्सर्वज्ञो वर्णानामुत्पादकस्तस्य तदनुवादकत्वात् । पदवाक्यात्मनः प्रवचनस्योत्पादकः सर्वज्ञ इत्यप्यनेनापास्तं प्रवचनपदवाक्यानामपि पूर्वपूर्वसर्वज्ञोदितानामेवोत्तरोत्तरसर्वज्ञेनानुवादात् सर्वदांगप्रविष्टांगबाह्यश्रुतस्य शब्दात्मनो द्वादशविकल्पानेकविकल्पस्यान्यादृशवर्णपदवाक्यत्वासंभवात् तस्यापूर्वस्योत्पादकायोगात् ।

स्यान्मतं—महेश्वरोऽनादिरेकः सर्वज्ञो वर्णानामुत्पादकः प्रथमं सृष्टिकाले जगतामिवोपपन्नस्तस्य सर्वदा स्वतंत्रत्वात् सर्वज्ञांतरपरतंत्रतापायात् तदनुवादकत्वायोगादिति तदप्यसत्यं तस्यानादेरेकस्येश्वरस्याप्तपरीक्षायां प्रतिक्षिप्तत्वात्, परीक्षाक्षमत्वाभावात् कपिलादिवत् । संभवे वा सदैवेश्वरः सर्वज्ञो ब्राह्मेण मानेन वर्षशतांते वर्षशतांते जगतां सृष्टा पूर्वस्मिन् पूर्वस्मिन् सृष्टिकाले स्वयमुत्पादितानां वर्णपदवाक्यानामुत्तरस्मिन्नुत्तरस्मिन् सृष्टिकाले पुनरुपदेष्टा कथमनुवादको न भवेत् ? । न ह्येकः कविः स्वकृतकाव्यस्य पुनः पुनर्वक्तानुवादको न स्यात् इति वक्तुं युक्तं,

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात्**[1]

इति वचनविरोधात् । एकस्य पुनः पुनस्तदेव वदतोऽनुवादासंभवे पुनरुक्तस्यैव सिद्धेः ततः कस्यचित्स्वयं कृतं काव्यं पुनः पुनर्वदतोऽनुवादकत्वे महेश्वरः सर्वदैवानुवादकः स्यात् । पूर्वपूर्ववादापेक्षयोत्तरोत्तरस्यानुवादरूपत्वात् । नच पूर्वपूर्ववर्णपदवाक्यविलक्षणान्येव वर्णपदवाक्यानि महेश्वरः करोति इति घटते तेषां कुतश्चित्प्रमाणादप्रसिद्धेः प्रसिद्धौ वा तेषां किमज्ञानात्तदा महेश्वरोऽप्रणेता स्यात् ? अथाशक्तेरुतप्रयोजनाभावादिति ? न तावदज्ञानात् सर्वज्ञत्वविरोधात् तस्य सर्वप्रकारवर्णपदवाक्यवेदित्वसिद्धेः अन्यथानीश्वरत्वप्रसंगात् । नाप्यशक्तेः—ईश्वरस्यानंतशक्तित्ववचनात् । यदि ह्येकदा कानि चिदेव वर्णादीनि प्रणेतुमीश्वरस्य शक्तिर्नान्यानि तदा कथमनंतशक्तिः स्यादनीशवत् । प्रयोजनाभावान्नान्यानि प्रणयतीति चेत् न सकलवाच्यकप्रकाशनस्यैव प्रयोजनत्वात् सकलवाच्यार्थप्रकाशनवत् । सकलजगत्कारणवद्वा प्रतिपाद्यजनानुरोधात् केषां चिदेव वर्णादीनां प्रणयने जगदुपभोक्तृप्राण्यनुरोधात् केषांचिदेव जगत्कार्याणां करणं स्या-

१ गौतमीयं सूत्रं ।

न्न सर्वेषां । तथा चेश्वरकृतैः कार्यैः कार्यत्वादिति हेतुर्व्यभिचारित्वान्न सर्वकार्याणामीश्वरनिमित्तत्वं साधयेत् । नच सकलप्रकारवर्णादिवाचकप्रपंचं जिज्ञासमानः कश्चित्प्रतिपाद्य एव न संभवतीति वक्तुं युक्तं सर्वज्ञवचनस्याप्रतिग्राहकत्वप्रसंगात् । तत्संभवे च सर्गे सर्गे सकलवर्णादीनां प्रणेतेश्वरोऽनुवादक एव स्यात् न पुनरुत्पादकः सर्वदैवेति सिद्धं ततोऽनेक एव सर्वज्ञोऽस्तु किमेकेश्वरस्य कल्पनया यथा चैको नवामिति वदति तदेवान्यः पुराणमित्यनेकसर्वज्ञकल्पनायां व्याघातात् वस्तुव्यवस्थानासंभवस्तथैकस्यापीश्वरस्यानेकसर्गकालप्रवृत्तावनेकोपदेशाभ्यनुज्ञानात् । तत्र पूर्वस्मिन् सर्गे नवमित्युपदेशीश्वरेण तदेवोत्तरस्मिन् सर्गे पुराणमित्युपदिश्यते न पुनरेकदैव नवं पुराणं चैकमिति व्याघातासंभवे कथमनेकस्यापि सर्वज्ञस्य कालभेदेन नवमिति पुराणमित्युपदेशतस्तत्त्ववचनव्याघातः ? इत्यलमनाद्येकेश्वरकल्पनया तत्साधनोपायासंभवात् ।

सोपायसिद्धस्तु सर्वज्ञोऽनेकः प्रमाणसिद्धः निरतकालोच्छिन्नस्य परमागमस्य प्रबंधेनाभिव्यंजकोऽनुवादक इति प्रयत्नानंतरमभिव्यक्तेः कथं चित्प्रयत्नानंतरीयकत्वं कथंचित्पौरुषेयत्वं साधयेत्–तथाहि—

परमागमसंतानमनादिनिधनक्रमं नोत्पादयेत्स्वयं कश्चित्सर्वज्ञोऽसर्ववेदिवत् ॥ १ ॥
यथैकः सकलार्थज्ञः स्वमहिम्ना प्रकाशयेत् तथान्योऽपि तमेवं चानादिः सर्वज्ञसंततिः ॥२॥
सिद्धा तत्प्रोक्तशब्दोत्थं श्रुतज्ञानमशेषतः प्रमाणं प्रतिपत्तव्यमदुष्टोपायजत्वतः ॥ ३ ॥
ततो बाह्यं पुनर्द्वेधा पौरुषेयपदक्रमात् जातमार्षादनार्षाच्च समासव्यासतोन्वितात् ॥ ४ ॥
तत्रार्षमृषिभिः प्रोक्तादुदुष्टैर्वचनक्रमात् समुद्भूतं श्रुतज्ञानं प्रमाणं बाधकात्ययात् ॥ ५ ॥
अनार्षं तु द्विधोद्दिष्टं समयांतरसंगतं लौकिकं चेति तन्मिथ्या प्रवादिवचनोद्भवं ॥ ६ ॥
दुष्टकारणजन्यत्वादप्रमाणं कथं च न सम्यग्दृष्टेस्तदेतत्स्यात् प्रमाणं सुनयार्पणात् ॥ ७ ॥

नन्वदुष्टकारणजन्यत्वेन श्रुतज्ञानस्य प्रमाणत्वसाधने चोदनाज्ञानस्य प्रामाण्यं स्यात् पुरुषदोषरहितायाश्चोदनायाः सर्वथाप्यपौरुषेयजनितत्वात् ।

तदुक्तं—

चोदनाजनिता बुद्धिः प्रमाणं दोषवर्जितैः ।
कारणैर्जन्यमानत्वाल्लिंगातोक्त्यक्षबुद्धिवत् ॥ १ ॥

तदेतदुक्तं—

गुणवत्कारणजन्यत्वस्यादुष्टकारणजन्यत्वशब्देनाभिप्रेतत्वात् लिंगातोक्त्यक्षबुद्धिषु तथैव तस्य प्रतिपत्तेः । न हि लिंगस्यापौरुषेयत्वमदुष्टं साध्याविनाभावनियमनिश्चयाख्येन गुणेन गुणवत्त्वस्यादुष्टत्वस्य प्रतीतेः । तथाप्रोक्तेरविसंवादकत्वगुणेन गुणवत्त्वस्य तथाक्षाणां चक्षुरादीनां नैर्मल्यादिगुणेन गुणवत्त्वस्येति ।

ननु चादुष्टत्वं दोषरहितत्वं कारणस्य तच्च कचिद्दोषविरुद्धस्य गुणस्य सद्भावात् । तथा मन्वादिस्मृतिवचने कचिद्दोषकारणभावात् । यथा चोदनायां तदुक्तं—

शब्दे दोषोद्भवस्तावद्वक्त्रधीनमिति स्थितं
तदभावः कचित्तावद्गुणवद्वक्तृकत्वतः ॥ १ ॥
तद्गुणैरपकृष्टानां शब्दे संक्रांत्यसंभवात्
यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रयाः ॥ २ ॥

तदप्यसारं सर्वत्र गुणाभावस्यैव दोषवत्त्वात्, गुणसद्भावस्यैव चादोषप्रतीतेरभावस्य भावांतरस्वभावत्वासिद्धेः, अन्यथा प्रमाणाविषयत्वविरोधात् । गुणवद्वक्तृकत्वस्य हि दोषरहितस्य वक्तृकत्वस्य संप्रत्ययः कथमन्यथा गुणदोषयोः सहानवस्थानं युज्येत ? रागद्वेषमोहादिवक्तुर्दोषावितथाभिधानहेतवः । तद्विरुद्धाश्च वैराग्यक्षमातत्त्वावबोधास्तदभावात्मकाः सत्याभिधानहेतवो गुणा इति परीक्षकजनमनसि वर्तते नच मन्वादयः स्मृतिशास्त्राणां प्रणेतारो गुणवंतस्तेषां तादृशगुणाभावात् । निर्दोषवेदपराधीनवचनत्वात्तेषां गुणवत्त्वमित्यप्यसंभावनीयं वेदस्य गुणवत्त्वासिद्धेः पुरुषस्य गुणाश्रयस्याभावात् । यथैव हि दोषवान् वेदान्निवर्तमानो

निर्दोषतामस्य साधयेत् तथासौ गुणवानपि-अगुणवत्तामिति न वेदो गुणवान्नाम। यदि पुनरपौरुषेयत्वमेव गुणस्तदानादिम्लेच्छव्यवहारस्यापि गुणवत्त्वं-अपौरुषेयत्वाविशेषात्।

तदेवं—

नादुष्टा चोदना पुंसोऽसत्त्वाद्गुणवतः सदा
तद्व्याख्यातुः प्रवक्तुर्वा म्लेक्षादिव्यवहारवत्॥ १॥
तया यज्जनितं ज्ञानं तन्नादुष्टनिमित्तजं
सिद्धं येन प्रमाणं स्यात् परमागमबोधवत्॥ २॥
वेदस्य पौरुषेयस्योच्छिन्नस्य चिरकालतः
सर्वज्ञेन विना कश्चिन्नोद्धर्तातींद्रियार्थदृक्॥ ३॥
स्याद्वादिनां तु सर्वज्ञसंतानः स्यात्प्रकाशकः
परमागमसंतानस्योच्छिन्नस्य कथंचन॥ ४॥
सर्वभाषाकुभाषाश्च तद्वत्सर्वार्थवेदिभिः
प्रकाश्यसे ध्वनिस्तेषां सर्वभाषास्वभावकः॥ ५॥
तत्प्रमाणं श्रुतज्ञानं परोक्षं सिद्धमंजसा
अदुष्टकारणोद्भूतेः प्रत्यक्षवदिति स्थितं॥ ६॥

ततः सूक्तं प्रत्यक्षं परोक्षं चेति द्वे एव प्रमाणे प्रमाणांतराणां सकलानामप्यत्र संग्रहात् इति संख्याविप्रतिपत्तिनिराकरणमनवद्यं स्वरूपविप्रतिपत्तिनिराकरणवत्।

विषयविप्रतिपत्तिनिराकरणार्थं पुनरिदमभिधीयते—द्रव्यपर्यायात्मकः प्रमाणविषयः प्रमाणविषयत्वान्यथानुपपत्तेः प्रत्यक्षविषयेण स्वलक्षणेन, अनुमानादिविषयेण च सामान्येन हेतोर्व्यभिचार इति न मंतव्यं तथाप्रतीत्यभावात्। न हि प्रत्यक्षतः स्वलक्षणं पर्यायमात्रं सन्मात्रमिवोपलभामहे। नाप्यनुमानादेः सामान्यद्रव्यमात्रं विशेषमात्रमिव प्रतिपद्येमहि सामान्यविशेषात्मनो द्रव्यपर्यायात्मकस्य जात्यंतरस्योपलब्धेः प्रवर्तमानस्य च तत्प्राप्तेः अन्यथार्थक्रियानुपपत्तेः। न हि स्वलक्षणमर्थक्रियासमर्थं क्रमयौगपद्यविरोधात् सामान्यवत्। नच तत्र क्रमयौगपद्ये संभवतः परिणामाभावात्। क्रमाक्रमयोः परिणामेन व्याप्तत्वात् सर्वथाप्यपरिणामिनः क्षणिकस्य नित्यस्य च तद्विरोधसिद्धेः प्रसिद्धे च सामान्यविशेषात्मनि वस्तुनि तदंशमात्रे विशेषे सामान्ये वा प्रवर्त्तमानं कथं प्रमाणं नाम प्रमाणस्य यथावस्थितवस्तुग्रहणलक्षणत्वात् तदेकदेशग्राहिणः सापेक्षस्य सुनयत्वान्निरपेक्षस्य दुर्णयत्वात्। तत एव न तद्विषयेणानेकांतः साधनस्य स्यात्। तत्र प्रमाणविषयत्वस्य हेतोरप्रवृत्तेः। अतःसिद्धो द्रव्यपर्यायात्मार्थः प्रमाणस्येति तद्विप्रतिपत्तिनिवृत्तिः।

फलविप्रतिपत्तिनिवृत्त्यर्थं प्रतिपाद्यते—प्रमाणात्फलं कथंचिद्भिन्नमभिन्नं च प्रमाणफलत्वान्यथानुपपत्तेः। हानोपादानोपेक्षाबुद्धिरूपेण प्रमाणफलेनानेकांत इति न शंकनीयं तस्याप्येकप्रमात्रात्मना प्रमाणादभेदसिद्धेः प्रमाणपरिणतस्यैवात्मनः फलपरिणामप्रतीतेः, अन्यथा संतानांतरवत्प्रमाणफलभावविरोधात्। साक्षादज्ञाननिवृत्तिलक्षणेन प्रमाणादभिन्नेन प्रमाणफलेन व्यभिचार इत्यप्यपरीक्षिताभिधानं तस्यापि कथंचित्प्रमाणाद्भेदप्रसिद्धेः प्रमाणफलयोर्नैरुक्तिसाधनविरोधात्। करणसाधनं हि प्रमाणं स्वार्थनिर्णीतौ साधकतमत्वात्। स्वार्थनिर्णीतिरज्ञाननिवृत्तिः फलं भावसाधनं तत्साध्यत्वात्। एतेन कर्तृसाधनात् प्रमाणात्कथंचिद्भेदः प्रतिपादितः तस्य स्वार्थनिर्णीतौ स्वतंत्रत्वात्। स्वतंत्रस्य च कर्तृत्वात् स्वार्थनिर्णीतेस्तु अज्ञाननिवृत्तिस्वभावायाः क्रियात्वात्। नच क्रियाक्रियावतोऽर्थांतरमेवानर्थांतरमेव वा क्रियाक्रियावद्भावविरोधात्। भावसाधनात्प्रमाणादज्ञाननिवृत्तिरभिन्नैवेति,अयुक्तं प्रमातुरुदासीनावस्थायामव्याप्रियमाणस्य प्रमाणशक्तेर्भावसाधनप्रमाणस्य व्यवस्थापितत्वात् तस्याज्ञाननिवृत्तिफलत्वासंभवात्। स्वार्थव्यवसितौ व्याप्रियमाणं हि प्रमाणमज्ञाननिवृत्तिं साधयेत् नान्यथा अतिप्रसंगात्। ततः सूक्तं—

प्रमाणात्कथंचिद्भिन्नाभिन्नं फलमिति

ततस्तस्य सर्वथा भेदे बाधकवचनात् । अभेदवत्संवृत्या प्रमाणफलव्यवहार इत्यप्रातीतिकवचनं परमार्थतः स्वेष्टसिद्धिविरोधात् ततः पारमार्थिकप्रमाणं फलं चेष्टसिद्धिलक्षणमभ्यनुज्ञातव्यं । ततःसर्वपुरुषार्थ-सिद्धिविधानादिति संक्षेपः ।

इति प्रमाणस्य परीक्ष्य लक्षणं विशेषसंख्याविषयं फलं ततः
प्रबुध्य तत्त्वं दृढशुद्धदृष्टयः प्रयांतु विद्याफलमिष्टमुच्चकैः ॥ १ ॥

इति श्रीस्याद्वादविद्यापतिश्रीविद्यानंदस्वामिविरचिता प्रमाणपरीक्षा समाप्ता ।



# इस ग्रंथमालामें क्रमशः नीचे लिखे ग्रंथ छपेंगे ।

## जैनदर्शनग्रंथ ।

| ग्रंथनाम— | टीकाकार व ग्रंथकर्ताओंके नाम— |
|---|---|
| तत्त्वार्थाधिगममोक्षशास्त्रपर गंधहस्तमहाभाष्य ( ८४००० श्लोक ) | श्रीमत्स्वामी समंतभद्राचार्य |
| „ श्लोकवार्तिकालंकार | स्याद्वादविद्यापति श्रीमद्विद्यानंदस्वामी |

## जैनसिद्धांतग्रंथ ।

| | |
|---|---|
| गोमट्टसार टीका | श्रीमदभयचंद्रसिद्धांतचक्रवर्ती |
| गोमट्टसार टीका | श्रीकेशववर्णी |
| परमात्मप्रकाश सटीक | श्रीयोगींद्रदेव |
| नाटकत्रय सटीक | श्रीमदमृतचंद्रसूरिप्रभृति |

## जैनन्यायग्रंथ ।

| | |
|---|---|
| न्यायविनिश्चयालंकार | श्रीमद्भट्टाकलंकदेव |
| न्यायकुमुदचंद्रोदय | श्रीमत्प्रभाचंद्राचार्य |

## जैनव्याकरणग्रंथ ।

| | |
|---|---|
| शब्दानुशासन ( शाकटायन व्याकरण ) | श्रुतकेवलिदेशीय श्रीमत् शाकटायनाचार्य |
| शब्दानुशासन अमोघवृत्तिसहित | „ |
| शब्दानुशासन चिंतामणि टीका सहित | श्रीयक्षवर्माचार्य |
| शब्दार्णवचंद्रिका ( जैनेंद्रलघुवृत्ति ) | सोमदेवसूरि |
| शब्दार्णव ( जैनेंद्रमहावृत्तिसहित ) | श्रीमत्पूज्यपादस्वामी देवनंद्याचार्य |
| प्राकृतलक्षण शब्दचिंतामणि स्वोपज्ञटीकासह | शुभचंद्राचार्य |

## जैनसाहित्यग्रंथ ।

| | |
|---|---|
| अलंकारचिंतामणि सटीक | श्रीमदजितसेनाचार्य ( वादीभसिंहसूरि ) |
| विक्रांतकौरवीय नाटक | महाकवि हस्तिमल्ल |
| अंजनापवनंजय नाटक | „ |
| मैथिलीपरिणयनाटक सुभद्रानाटिका „ | „ |
| चतुःसंधान, सप्तसंधान, चतुर्विंशतिसंधान | श्रीमत्पंडितराज जगन्नाथ महाकवि |

## पौराणिक काव्यग्रंथ ।

| | |
|---|---|
| त्रिषष्टिशलाका महापुराण ( प्राकृत ) | श्रीमत्पुष्पदंताचार्य |
| हरिवंशपुराण और पद्मपुराण | „ „ |
| पद्मपुराण ( जैनरामायण १८,००९ श्लोक ) संस्कृत | श्रीमद्रविषेणाचार्य |
| पाण्डवपुराण ( जैनमहाभारत ) पार्श्वपुराण „ | महाकविश्रीमद्वादिराजसूरि |

## गणितज्योतिष ग्रंथ ।

| | |
|---|---|
| गणितसारसंग्रह | गणिताचार्यशिरोमणि श्रीवीराचार्य |
| त्रिलोकसार सटीक ( प्राकृत ) | श्रीनेमिचंद्राचार्य जैनसिद्धांतचक्रवर्ती |
| भद्रबाहुसंहिता „ सार्द्धद्वयद्वीपप्रज्ञप्ति | ज्योतिषाचार्य श्रीमद्भद्रबाहुस्वामी |
| जंबूद्वीपप्रज्ञप्ति „ | श्रीपद्मनंद्याचार्य |
| चंद्रप्रज्ञप्ति और सूर्यप्रज्ञप्ति „ | श्रीमदमितगत्याचार्य इत्यादि २ |

C. P. Press, Benares City.